# सामवेदसंहिता

तत्र

**छन्दआर्च्चिकः**

**तत्रापि आग्नेयैन्द्रेति पर्वद्वयात्मकः**

**अध्यायचतुष्कः प्रथमोभागः**

भगवत्सायणाचार्य्य-विरचित-भाष्य-सहितः

अधीतवेद-"प्रत्नकम्रनन्दिनी"-सम्पादकेन

**श्रीसत्यव्रतसामश्रमिभट्टाचार्य्येण**

वङ्गसामगेन

दीक्षितो यथावसरं शोधितश्च।





**मुन्शीराम मनोहरलाल**

**पब्लिशर्स प्रा. लि.**

SĀMAVEDA SAṀHITĀ
with the commentary of Sāyaṇa Āchārya

*Edited by*
Satyavrata Sāmaśramī Bhattacharyya

VOLUME II

MUNSHIRAM MANOHARLAL
Price 2000 for 5 volumes

Originally Published in Bibliotheca Indica, Calcutta, 1871-78.
New Series nos. 301, 321, 322, 323, 324 and 334.

Reprinted 1983
Printed and published by Munshiram Manoharlal Publishers Pvt. Ltd.,
Post Box 5715, 54 Rani Jhansi Road, New Delhi-110055.

# ॥ आर्चिकस्य परिच्छेद-सूची ॥



# ॥ गेयगानस्य परिच्छेद-सूची ॥

## ॥ छन्दआर्चिक-परिशिष्टभूतस्य आरण्यगानस्य परिच्छेद-सूची ॥



## ॥ अथ छन्दआर्चिक-परिशिष्ट-परिशिष्टरूपस्य स्तोभस्य परिच्छेद-सूची ॥

## ॥ अथ छन्दआर्चिक-द्वितीय-परिशिष्टस्य परिच्छेद-सूची ॥



## ॥ अथ छन्दआर्चिक-तृतीय-परिशिष्टस्य-परिच्छेद-सूची ॥



## ॥ अथ सायणभाष्यस्य परिच्छेद-सूची ॥



## ॥ छन्दआर्चिकस्य छन्दः-सूची ॥

---

## ॥ छन्दआर्चिकस्य देवता-सूची ॥

---

## ॥ छन्दआर्चिकस्य ऋषि-सूची ॥

---

## ॥ मन्त्राणामकारादिक्रमेण सूची ॥

परिच्छेदः

---

## ॥ क्रोड़पत्रम् ॥

( अशीति-पृष्ठस्येऽष्टमेपङ्क्तौ निवेश्यम् )

चतुर्थाधिकरणमारचयति—[५४] "स्युरेकादशिना किं प्रायणीयोदयनीययोः। प्रत्येकमखिलाः किं वा विभज्याः स्युस्तयो, रपि ॥ उद्देश्ययोः प्रधानत्वात् प्रत्येकं पशवोऽखिलाः। नोद्देश्यौ शतवद्भागः शिष्टस्त्वासत्तितोऽन्तिमे ॥ द्वादशाहे श्रूयते— "एकादशिना प्रायणीयोदयनीययोरतिरात्रसंस्थयोरतिरात्रयोरालभेरन्निति" तएते पशवएकादशापि प्रायणीयेऽहनि कर्त्तव्याः तथोदयनीयेऽपि सर्वे कर्त्तव्याः। कुतः? प्रायणीयोदयनीययोरुद्देश्यत्वेन प्राधान्यात्—प्रतिप्रधानं चाङ्गावृत्तेर्युक्तत्वादिति पूर्व्वपक्षः। वचनान्तरेण विहितानामेकादशानां प्रकरणेन द्वादशाहाङ्गत्वे सिद्धदेशाकाङ्क्षायां तान् पशूनुद्दिश्य प्रायणीयोदयनीयौ देशत्वेन विधीयेते। तत्र कुत उद्देश्यत्वम्? कुतस्तरां प्राधान्यम्? कुतस्तमां पश्वावृत्तिः? एवं सति यथा—'शतं देवदत्तयज्ञदत्तयोर्व्विधीयताम्'-इत्यत्र देवदत्ते पञ्चाशद्विधीयते यज्ञदत्ते पञ्चाशदिति विभागस्तथा प्रायणीये पञ्च पशव उदनीये पञ्चेति विभागो युक्तः। पशवशिष्ट एकः पशुरन्तिमः स प्रत्यासन्नत्वा दन्तिमेऽहन्युदवसानीये कर्त्तव्यः"[५४]-इति ॥

---

* सरघ्न्यादिते क्वचिदपि पुस्तके नैतदधिकरणोद्धरणमिह दृश्यते, तन्न केषाञ्चित्-पाण्डित्यमेवात्र मूलमित्यनुमीयतेऽस्य सामविचारेऽप्रकृतत्वाच्च तथा पाण्डित्यम्; परमेतस्यैव भगवतीभाष्यकृत उपसंहृतिवचने (८५—१) द्विपञ्चेति परिगणनश्रुतेरस्याप्यधिकरणस्य सामवदीयसङ्ख्याचाप्युद्धृत्योक्तं च इत्यत्र श्लोकार्थं निर्णीतम् क्रोडीकृतम्। स०।

॥ नमः सामवेदाय ॥

# सामवेदसंहिता।



## अथ पञ्चमाध्यायः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्या-तीर्थ-महेश्वरम्॥ १ ॥
तृतीयं पर्व सोमस्य पवमानस्य संस्तुतिः।
उच्चातइति गायत्र्यश्चत्वारिंशच्चतुर्युताः* ॥ २ ॥

---

* गतमाग्नेयं पर्व, गतञ्चैन्द्रम्; इदानीमिदं तृतीयं सम्प्रवर्त्तते। अत्र पर्वणि सोमस्य देवस्य संस्तुतिः श्रूयते, प्राधान्येनेति यावत्। अस्ति सोमः यज्ञार्थाभिषुतः ओषधि-विशेषः—

"सोमं मन्यते पपिवान् यत् सम्पिंषन्त्योषधिम्।
सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति तकश्चन॥"

(ऋ० १०, ७, ६, ४)

-इति श्रुतेः. "सोमं मन्यते पपिवान् यत् सम्पिंषन्त्योषधिमिति, वृथासुतमसोम-माह—सोमं यं ब्रह्माणं विदुरिति, न तस्याश्नाति कश्चनायज्वेत्यधियज्ञम्"—इति च यास्ककृत-तद्व्याख्यानात्। स एव सोमः पवमान इत्युच्यते पूयमान इति च तदर्थः। अस्ति च सोमश्चन्द्रमावाचकः, "सोमो रूपविशेषैरोषधिश्चन्द्रमावा"—इत्यादि यास्कोक्तेः (दै० ५, ५)। तदत्र कतरस्य ग्रहणमित्याशङ्कां वारयितुं पवमानस्येति विशेषणम्। एतेन चन्द्रमसो व्यावृत्तिः। एवमेव पर्वणि यावन्त ऋचः श्रूयन्ते विशेषोल्लेखाभावे

तत्र प्रथमे खण्डे—

सैषा प्रथमा।

३ १ २ ३ १ २र ३ १ २र
उच्चातेजातमन्धसोदिविसद्भूम्याददे*।
१ २उ ३ १ ३ १ २
उग्रꣳशर्ममहिश्रवः॥ १॥ १†

५ ४ २र २ऽ १ ७
ओम्॥ (आजिगम्॥) उच्चा। तेजाउ३तामन्धासा २:।
१ र र २ १ १ १ २
दिविसद्भूम्याददाइ। उग्रꣳआ२३र्मा ३। मा२हा२३४।
५र र २ २ ५
औहोवा। उप्। आ२३४वाः॥ १॥

२ १र ५ २ १ ५
(आभीकम्॥) उच्चाते२३४जा। तमन्धा२३४साः।

---

सर्वासामेवासां पवमानः सोमो देवतेत्यं बोधितव्यं—पावमानं पर्वेति। "उच्चाते"-इति पञ्चम-द्वितीय-चतुर्थस्य प्रथमा ऋक्, इयमेवास्य पर्वणोपि प्रथमा; एतदादि-षष्ठ-प्रथम-द्वितीयान्तिमान्ताः दशचतुष्टयात्मिकाः चतुर्युताश्चत्वारिंशदृचः गायत्र्यः गायत्रीच्छन्दस्काः।

* "दिविषद्भू"-इति ऋ०।

† उ०१,१;८,१ = ऋ०७,१,१९,५=आर०१,२,२२;— २,१,१९ —२,१,११ = ज०१,१,१;—२,१,१२;—६,१,९—१०;—७,१,१२;—८,२,११;—१०,१,१०—११;—११,१,१४;—१२,१,१—२;—१२,२,७;—१३,१,१७;—१५,१,३-४-५;—१९,१,११;—२०,१,६-७-८—९;—२०,१,१४=ऊह्य १,२,१।

२ १ ५ २ १र २१ २ १ २
दिवाइसार२३४इ । मियाददाइ । उग्र७ शा२३र्मा । मह्वाये

१ २ ५र र ३११११
३ । आ२वा३४ औहोवा । वा२३४५इ ॥ २ ॥

५र र र र २ २
( ऋषभपावमानम् ॥ ) हाहाउच्चातेजा । हाइ । हा-

१ २ ५ २ १ र २ २ २
३इ । तामा २न्धा२३४साः । दिविसङ्कमिया१दा३दे । उग्र७

२ ५ १ २ ४ ५ ४ ५
शा२३४र्मा । ओमो३ । मह्होवा । आपुवोईहाइ ॥ ३ ॥

१ र र र ४ ५
( आभीकम् ॥ ) ऊ२३४च्चातिजा५ । तमौहोन्धासाः ।

२ १ र२ २ २ २ २ ५ १ ऽ २
दिविसङ्कमिया१दा३दे । उग्र७ शा२३४र्मा । माह्वा३उवा

२ ५
३४३ । आ३४५वोईहाइ ॥४॥

५ र र २१ १र ऽ
(वाभ्रवे द्वे ॥ ) उच्चातेजा । तम । धासा२३ः । ओमो३-

२ १ २र १ २ १र ऽ २ १
वा । दिविसङ्क । मियादा१दे२३ । ओमो३वा । उग्रा७

२ १र ऽ २ १ २ ५र र २
शा१र्मा २३ । ओमो३वा३ । मा२ह्वा२३४औहोवा । अवा३-

१ ११११
ई २३४५ ॥ ५ ॥

५र र २१ २ १ २र १र
उच्चातेजा । तमन्धा२३साः । दिविसङ्क । मिया-

२ १ २ २ १ २ २ ३ २ १ २
दा२३दाइ। ऊग्रा२ऽ३हाइ। शार्मा३हाइ। महा ३ होये-
१ ३ ५र र ३ ५
३। आ२ वा २ ३ ४ औहोवा। म्वा २ ३ ४ भौः॥ ६ ॥

५ ४र ५र र ४ १
(इन्द्राण्याः साम॥) उच्चातेजातमा। धासा२३ः।
१र ऽ २ १ २र १ २ १र ऽ २
ओमो३वा। दिविसद्भू। मियादा१दे२३। ओमो३वा।
१ २ १र ऽ २ १ २ १ २
उग्रा३ऽ शा१र्मा२३। ओमो३वा। महाये३। आ२वा२
५र र २ ५
३४औहोवा। ऊ३२३४पा॥ ७॥

५ र र र ४ ५ २ १ र
(शैशवे द्वे॥) उच्चातेजातमन्धासाः। दिविसद्भू म्याद-
२ १ ५ ३ २ ४
दाइ। उग्रऽशा२३४र्मा। महा३इआ५वा६५६ः॥ ८॥

५ र र र ५ २ १र र २
उच्चातेजातमन्धा६सा:। दिविसद्भू। म्यादा२३दाइ।
१ २ १ ऽ २
उ। ग्रऽशा२३र्मा। महा२। हा२इ। औ३हो३१इ।
ऽ २ ३ २ १ ३
अवा२:। हा२इ। औ२हो३१इ। इया३होइ। इयो२३
२ १ १ १ १
४५वा६५६। ऊ२३४५॥ ९॥

३ २ ३र ४र ५ १ ३ २
(दोहसाम॥) उच्चा३४औहोवा। तेजा२। तमा३४५।

२ ५ २ १ र र २र १ ७ २ ३
धार२३४सा: । दिविसद्भूम्याददे । उग्रꣳशार२३मो । महि

२ १ २ ४ ५ ४
श्रवो । औ३होवा । होप्५इ । डा ॥ १० ॥

५ र र . र र र र र ५
(दोहीयसाम ॥) उच्चातेजातमन्धसोदोहाइदोहाईए ।

२ १ र र २र ऽ २ ७ २ २ १
दिविसद्भूम्याददे । दो३हाइ । दो३हा३ए । उग्रꣳशार२३

२ ऽ २ ऽ २ २ १ २ १
र्मा । दो३हाइ । दो३हा३ए । महिश्रार२३वा३४३: । ओ२

३४५इ । डा ॥ ११ ॥

१ २र १र ४र ५ २ १
(इन्द्राण्याः साम ।) उच्चातेजातमन्धसा: । दिवाइ

५ २ १ २र १र ऽ २ ऽ २
सार३४द्भू । मिया२ददे । ओम् । ओ३वा । ओ३वा ।

१ ११ १ ऽ २ ऽ १
ववार२३होइ । उग्रꣳशार२३र्मा । ओ३वा । ओ३वा ।

१ १ २ १ २ १ ऽ ३ ५र र २
ववार२३होइ । महिश्रवोर । या २ ३ ४ औहोवा । ययु

३ १ १ १ १
रे२३४५ ॥ १२ ॥

५र २ ४र ५
(आमहीयवम् ॥) उच्चाता३इजातमन्धसा: । दिवा

२ १ २ १ २ १ २ १
इमा२द्भू१। मिया२३इदाइ। उग्रꣳशर्मा। महा-

२ २र १११
२३इ। अवाउ। वा३। स्तौषै३४५॥ १३॥ १

अमहीयुर्ऋषिः*। हे "सोम!"† "ते" तव सम्बन्धिनः "अन्धसः" रसस्य‡ "उच्चा" उपरि¶ "जातम्" अन्न।

---

* "आङ्गिरसः" इति ऋषि-नैगेयः।

† "सोमः" निघण्टौ दैवतकाण्डेऽन्तरिक्ष—विभागीयस्तुतिं प्राप्तमो देवः, वायु-साहचर्याच्च भज्यते, यथा च राजधानीस्तवनेन भवति राज्ञः स्तुतिः, भवति च मासस्तवनेन वर्षस्य स्तुति; तथैवास्य स्तवनेन वायोरेव स्तुतिः। तथाहि—

"यत्त्वादेवप्रपिबन्ति तत आप्यायसे पुनः।
वायुःसोमस्यरक्षितासमानांमासआकृतिः॥"
(ऋ० १०, ७, १, ५)

"यत् त्वा देव! प्रपिबन्ति तत् आप्यायसे पुनरिति नाराशंसानभिप्रेत्य पूर्वपक्षापरपक्षाविति वा। वायुः सोमस्य रक्षिता वायुमस्य रक्षितारमाह साहचर्याद्रसहरणाद्वा। समानां संवत्सराणां मास आकृतिः"-इत्यादि यास्ककृतं तद्व्याख्यानम्। अतएव "तिस्र एव देवताः (नि० दै० १, ५)"-इत्याद्युक्तिरदोषा। स च ओषधि-विशेषः, तथाहि "ओषधिः सोमः (सुनोतेर्यदेनमभिषुण्वन्ति) बहुलमस्य नैघण्टुकं वृत्तमाश्चर्यमिव प्राधान्येन"-इत्यादि नि० ११, २-३-४-५। स च दुग्धाभ-रस-विशिष्ट-वल्लीभ्यः क्षरित-पदार्थः सुतरां दुग्धाभरसरूपः, तथाच श्रूयते—"सोमोदुग्धाभिरक्षाः" (ऋ०३,२,५, ५ द्वितीयः पादः) "सोमो दुग्धाभ्यः क्षरति"-इति च तद्भाष्यम् (५, ३)।

‡ "अन्धइत्यन्ननामाध्यानीयं भवति। * * *। तमोऽप्यन्धउच्यते नास्मिन् ध्यानं भवति न दर्शनमन्धन्तमइत्यभिभाषन्ते। अयमपीतरोऽन्ध एतस्मादेव।"-इत्यादि नि० ५, १।

¶ अस्ति हि उच्चैरर्थे उच्चेति, तस्यैव "निपातस्य (६, ३, १३६)-इति दीर्घे रूपमुच्चा-इति।

अथ द्वितीया।

२   १   २   १   २   २   १   १     ३   १   २

**स्वादिष्ठयामदिष्ठयापवस्वसोमधारया।**

१   २   ३   १   २   ३   २

**इन्द्रायपातवेसुतः ॥ २ ॥ २ ***

१र   २   १   २   १   २   र

**(आजिगम ॥) स्वादाइष्ठाया। मदाइष्ठाया। पवस्वसो।**

१   २   २   १   २   १   २   १

**माधा१रा२३या। इन्द्रायापा। तवाइसू२३ता३४३ः। ओ२३४५इ। डा ॥ १४ ॥**

अपिच। "दिवि" द्युलोके "सत्" विद्यमानम् "उग्रम्" उद्गूर्णम्† "शर्म" सुखं‡ "महि" महत्¶ "श्रवः" अन्नं§ "भूम्यादद" [इत्यत्र यमामनन्ति। विसर्जनीयलोपः सांहितिकः] भूमिः भौमजन्यः अस्मात्त्वयः; भूमिष्ठैरादीयतइत्यर्थः ॥ १ ॥ १

---

* उ० १,१,१५,१ = ऋ० ७,७,१६,१ = आर १,२,३ ;—३,१,७ = ऊ० १,१,८ ; —८,२,१० ;—१०,२,१० ;—११,२,७ ; —१२,२,४ ; —१३,१,६ ;—१८,१,१५—१६ ;—१९,२,१८ ,—२०,२,१० ;—२१,१,२० = ऊह्य ३,१,२ ;—४,१,१२ ;—४,२,१८।

† 'उग्रम् बलवत्'-इति वि०।

‡ 'शर्म शरणम्'-इति वि०। शर्मेति गृह-नामसु चैकविंशतितमं पदम् नै० ३, ४।

¶ महत्, महः, महिः-इति पाठभेदेन पठ्यते नै० ३, ४, १।

§ "श्रवः"-इति अन्ननामसु चतुर्थं पदम् ( नि० २, ७ )।

२र १ १ १ २ १
(सुरूपम्॥) स्वादिष्ठया२ इया२इया। मदिष्ठा
१ १ १ २र १ र १
या२। पवस्वसो२। इया२इया। मधाराया२। इन्द्राया
१ १ २ १ १ १
पा२। इया२इया। तवाइसू२३ता३४३:। ओ२३४५इ।
डा॥ १५॥

२र १ १ १ १
(सुरूपोत्तरम्॥) स्वादिष्ठयौहो२। इया। मदिष्ठा
१ १ २र र र १
या२। पवस्वसौहो२। इया। मधाराया२। इन्द्राय
१ २१ २ १
पौहो२। इया। तवाइसू२३ता३४३:। ओ२३४५इ।
डा॥ १६॥

२ ३ ५ २ ऽर १ ७
(जमदग्नेः शिल्पे द्वे॥) ओइस्वा२३४दी। ष्टया३मादिष्ठ-
२ ३ ५ १ २ र १र २ २ ३ ५
या। ओ२३४वा। पवस्वसोमधारया३। ओइ२३४न्द्रा।
१ ३ ५र र २ र ३ १
या२पा२३४औहोवा। तवेसुताऽ१ः॥ १७॥

३ २ ३ ५ १ऽर १ ७ २ ३
उहुवाइ। स्वा२३४दी। ष्टया३मादिष्ठया। ओ
५ १ २ र १र २ २ ४
२३४वा। पवस्वसोमधारया३। उहुवाइ। इन्द्रापूयपा।
१ ३ ५र र ३ ५
ता२वा२३४औहोवा। सू२३४ताः॥ १८॥

४र ५ २ १ २
(सꣳहितम् ॥) स्वादाइष्ठया । मदिष्ठयाउ । पावा
४ ५ २र १ २ ४ ५ ५ ४
३स्वासो । मधारयाउ । आइन्द्रा३यापाई । हाउ । त-
वा५इस्तुताउ । वा ॥ १९ ॥

४र ५ र ४ ५ र ४ ५ र ४र र ४
(शाकुलः ॥) स्वादिष्ठयामदिष्ठयापवस्वसोमधारयाइ ।
४ २ १ ३ २
द्रा५यपा । तवा२इ । म२ । तवा२इ । ऊ२ । तवा३४
५र र ३ ५
औहोवा । सू२३४ताः ॥ २० ॥

५र र र र ४ ५ २ २
(गम्भीरम् ॥) औहोहुम्हाणहिया । हा३हाइ ।
१र २ २ ५ २ ३ ५ ५र र र
स्वादाइष्टाया । मा२३४दी । उइमा२३३दी । औहोहुम्-
र ४ ५ २ २ २ २ ३ ५
हाणहिया । हा३हाइ । ष्ठयापाव । स्वा२३४सो । औ
३ ५ र र र र ४ ५ २ २ १
स्वा२३४सो । औहोहुम्हाणहिया । हा३हाइ । मधा
२ ३ ५ २ ३ ५ र र र र ४ ५
रया । इ२३४न्द्रा । औइ२३४न्द्रा । औहोहुम्हाणहिया ।
२ २ १ २ २ ५ २ ३ ५
हा३हाइ । यपातवाइ । सू२३४ताः । औइसू२३४ताः ।
र र र र ४ ५ २ १ ५र र ३ १
औहोहुम्हाणहिया । हा३हा३४ । औहोवा । ई२
१ १ १
३४५ ॥ २१ ॥

अथ तृतीया ।

१ २　　३ १ २　३ १ २　　३ २
वृषापवस्वधारयामरुत्वतेचमत्सरः ।
३ १ २ ३ १ २
विश्वादधानओजसा ॥ ३ ॥ ३ *

४र ५ र　४　४ २
( सᳰहितम् ॥ ) स्वादिष्ठयाम । दा५इष्ठया । पवा२ ।
१　२　१　१　२　१
स्वा२३सो । मधा२राया । आ२३इन्द्रा । या२पा ।
०　२　५
तवा२३ । हाउवा३ । सू२३४ताः ॥ २२ ॥ २

५र　२र १　२
( सोमसाम ॥ ) वृषापवा । स्वधारायार२ । मरुत्वताइ ।
२　१　२ ३　५र र　२
चमत्सा२३राः । वाइश्वा२३ । दा२धा२३४औहोवा । न-
१र　२ १ १ १ १
ओजसा२३४५ ॥ २३ ॥

मधुच्छन्दाऋषिः† । हे "सोम !" "इन्द्राय" "पातवे"‡ पातु "सुतः" अभिषुतस्त्वं "स्वादिष्ठया" स्वादुतमया "मदिष्ठया"¶ अतिशयेन मादयित्र्या "धारया§" "पवस्व" क्षर ॥ २ ॥ २

---

* उ०२,१,१०,१ = ऋ०७,२,२,४ = ऊ०१,२,१९; —४.१,१—२—३;—४,२,१ ;—७,१,१—२;—११,२,१४—१५;—१८,१,१८—१९; —२०,१,१;—२२,२,९—१० ।

† "वैश्वामित्रः"-इति ऋषि-नैगेयः ।　　　　‡ तुमर्थे तवेङ् प्रत्ययः (३,४,९) ।

¶ "तुश्छन्दसि ( ५, ३, ५९ )"-इतीष्ठन् ।　　　　§ इवलुप्तत्वात् ।

४ ५ २ ५ १ २ ५
(सोमसाम ॥) वृषाह्वाउ । पा२३४वा । स्वाधारा२३४या ।

२ ५ ३ ५ २ २ ५ १ २र
मा२३४रु । त्वा२३४ताइ । चामत्सा२३४राः । वाइश्वाद

१ २ ५र १ ३ ५
धा२३ । ना२ओ२३४औहोवा । जा२३४सा ॥ २४ ॥

४ ५र ४ ५ र ५ १ २
(आभ्रुभार्गवम् ॥) वृषापव । स्वधारा६या । मारुत्वता

१ २ ५ १ २ ३२
३इ । चामा२त्सा२३४राः । विश्वादा१धा२ । नओ३ ।

१ ५ ५
जा२३४सो६हाइ ॥ २५ ॥

४ ५ ४ २१ ३२ ऽ २
(वैश्वदेवम् ॥) आइवृषा । पवा । इहा । औ३हो ।

१र ५ २ १ २ २ १
स्वधारा२३४या । म । रु । त्वते३हाइ । च । मा ।

१ २ ५ र र र र २र
त्सरा२३हा३४इ । विश्वाद्धाहाउ । नओजसाहाउ ।

२ २ १र र ऽर १ ११
वा ३ ४ ३ ओ ३ ४ ५ वा ६ ५ ६ । अस्मे रायार३उतश्रवा २ ३

१ १
४ ५ः ॥ २६ ॥

५र ३२ ४ ५ २ १ ३२
(वैश्वदेवम् ॥) वृषा । पवा३ । एहिया । स्वधार । रया३४

३र ४र ५ १ २ ३र ४र ५ १र २ २ २
औहोवा । मारु३४ । औहोवा । त्वतेचमा१त्सा३राः ।

५ २ २ र १ २र १ २र
औ३हो३१येऽ। औहो२३४५वाई५६। विश्वादधान
१र २ १११११
ओजसा२३४५॥ २७॥

१ १र २ ११११
(इन्द्रसाम॥) वृषापावा२३। हौहोइ। औ३हो२३४५।
२ १र २ ११११ १
स्वधारायार३। हौहोइ। औ३हो२३४५। मरुत्वा-
१र २ ११११ १
ते२३। हौहोइ। औ३हो२३४५। चमात्सारा२३ः।
१र २ ११११ १ १र
हौहोइ। औ३हो२३४५। विश्वादाधा२३। हौहोइ।
२ ११११ १ १र २
औ३हो२३४५। नओाजासा२३। हौहोइ। औ३हो
१
२३४३। ओ२३४५इ। डा॥ २८॥

२ १ २ ३र र ५ २ १
(इन्द्रसाम॥) वृषापावा। औहौहो२३४वा। स्वधा-
२ ३र र ५ २ १ २ ३र र
राया। औहौहो२३४वा। मरुत्वाता। औहौहो-
५ २ १ २ ३र र ५ २ १ २
२३४वा। चमात्सारा। औहौहो२३४वा। विश्वादाधा।
३र र ५ २ १ २ ३र र ५
औहौहो २३४वा। नओाजासा। औहौहो२३४वा।
४
हो५इ। डा॥ २९॥

५र ४ ५ ४ ५ २ १
(यौक्ताश्वम॥) औहौहोहाइ। वृषा। पवस्वा३धा-

२ १ २ ५ १ ७ १
रायाइ। माऊ२त्वा२३४ताइ। आइ। चमा२३। चमा२
२ ५ र ४ ५ ४ ५ १ २ ५
त्मा२३४राः। औहोहोहाइ। विश्वा। दधा२ना२३४ओ।
२ ३ ५र र २ ३ २
जासा२३४औहोवा। ओइ। ज्वरआ ॥ ३० ॥

५ र र ४ ५ २ १ २
(यौक्तोत्तरम् ॥) वृषाऔहोहोहाइ। पवा३स्वाधा
२ १ २ ५ ३ २ १
१रायाइ। माऊ२त्वा२३४ताइ। चमा३इ। ओइ।
७ २ ५ र र ४ ५ १ ३
चमा२त्मा२३४राः। विश्वाऔहोहोहाइ। दधा२ना-
५ १ ३ ५र र २ ३
२३४ओ। जा२सा२३४औहोवा। ओइ। जू २ ३ ४-
५
वा ॥ ३१ ॥ ३

॥ इति ग्रामे गेये द्वादशः प्रपाठकः ॥

भृगुर्वारुणिऋषिः*। हे "सोम!" त्वं "वृषा" स्तोतृणामभिमतस्य वर्षकः† सन् "धारया" त्वदीयया "पवस्व" द्रोणकलशं‡ मागच्छ। [पवतिर्गतिकर्मा¶। आगतस्त्वं यदास्माभि-

* अथवा जमदग्निः भारद्वाजः (अनु०)।

† वृषन्निति नाम्नस्य रूपमिदम्। प्रथमे खण्डे २९९, ३०१, ३१९, ५०१, ५४५, ७८०, ८३४ पृष्ठासु च व्याख्यातम्।

‡ सोमस्याधारपात्रविशेषम्। अत्रैव चोत्तरत्र ६,१,२,७ — ४,१०—५,९ अनुविदितम्।

¶ निघण्टौ गतिकर्मसु "पवते"-इत्यस्याष्टोत्तरशततमत्वेन दर्शनात् (२,१४)।

अथ चतुर्थी।

२ ३ २ ३१२ ३ १ २ ३ १ २
यस्तेमदोवरेण्यस्तेनापवस्वान्धसा।

३ १ २ ३ २
देवावीरघशᳫंसहा ॥ ४ ॥ ४ *

४ ५ १ २ ३ ५
ओम् ॥ (भासम् ॥) यास्ताइ। मादो। वाराओ२३४वा।

३ ५ ४ ५ १ ८ २ ३ ५ ३
णी२३४याः। ताइना। पावा। स्वाइआओ२३४वा। धा-

रिन्द्राय दीयते तदा] "मरुत्वते" सहाया मरुतो यस्य सन्ति†
तस्मै इन्द्राय "मत्सरः"‡ मदकरश्च भव। कीदृशः? "विश्वा"¶
विश्वानि सर्वाणि व्याप्तानि वा धनानि "ओजसा" आत्मीयेन
बलेन युक्तः सन् स्तोतृभ्यस्तानि प्रयच्छन् त्वं मादयिता भवेति
समन्वयः ॥ ३ ॥ ३

---

* ऊ०२,१,१५,१= ऋ०७,१,२१,४= ज०२,१,५;—४,१,१०;—६,२,७;— ९,३,८;
—११,२,९—१७—२०;—१२,२,९;—१३,२,१७;—१४,२,११—१२—१३; २०,१,२ —३-
४ = कल्प १,२,१;—३,१,४— १४—१७।

† अस्ति मरुत ऋत्विङ्नामसु (३,१८)—रूपनामसु (३,१७)—हिरण्यनामसु च
(१,२) निघण्टौ। तत्रैव दैवतकाण्डेऽन्तरिक्षदेवतासु च "मरुतः"-इति दृश्यते। अत्र
च तेषामेव देवगणानां ग्रहणम्; तथा च श्रूयते—"असि सोमो"-इत्यादि (प्र०२९२पृ०)
मरुतामिन्द्रसहायभूतत्वञ्च "श्वसस्त्वा"-इत्यादौ (प्र०६५६पृ०) श्रूयतएव।

‡ मदिधातोरौणादिके सरप्रत्यये रूपम्। अत चोत्तरवान्यचापि चतुर्षु (६,१,
१,३—३,८—११—४,१०) ओष्यन्ते मत्सर इति।

¶ सुप आले रूपम् (७,१,३९)।

२३४सा । दाइवा । वाइरा । घाम्रौ३ओ२३४वा । सा२-
३४द्दा ॥ १ ॥

(सोमसाम ॥) यस्तेमदाः । वराइणियोः । ताइनापावा-
३स्वा३ । अन्धसा । दाइवावाइरा३४ । द्दाउ । घशा
५ऽसद्दा । द्दो५इ । डा ॥ २ ॥

(प्राजापत्यम् ॥) यस्ता३२इमा२३४दाः । वराइणाया ।
आ२३४वा । द्दा । ओ२३४वा । द्दाइ । ताइनापव ।
स्वान्धासा । ओ२३४वा । द्दा । ओ२३४वा । द्दाइ ।
दाइवावाइरा । ओ२३४वा । द्दा । ओ२३४वा । द्दा३इ ।
घा२म्रा२३४ओद्दोवा । सद्दो२यौ३ष्टा२३४५ः ॥ ३ ॥

(सोमसाम ॥) यस्ताइमा२३दोवरेणियाः । ताइनापव ।
स्वान्धा१सा२ । दाइवा२वाइरा२३ । घशो२३४वा । सा५
द्दोई्दाइ ॥ ४ ॥

अथ पञ्चमी।

३ २उ ३ १ २ ३ १ र ३ १ २
तिस्रोवाचउदीरतेगावोमिमन्तिधेनवः।

५ र २ ४ ५ ४ ५ १ २
(भासꣳसाम॥) यस्ते। माइदा। वा। इया। राइणा

१ र २ ५ २र २र २ १
१या२ः। ताइनापव। स्व। औ३हो। वाहा। धसा२।

१ १ ३ ५र र २ ३ २
दाइवा२३। वा२इरा२३४ ओहोवा। घशꣳसाहा१॥ ५॥

५ र र ५ २र २र
(अह्वनह्वंडꣳसोमसाम॥) यस्तेमदोवरेणियाइए। तेना-

र २र२र र २ १ २ १
पवस्वान्धसा। देवावीरा२३। हाइ। घाशाउवा। सा-

२ २ ५
हाउवा३। ऊ३२३४पा॥ ६॥ ४

अमहीयुर्ऋषिः*। हे "सोम!" "ते" तव "देवावीः"† देवकामः "अघशंसहा" राक्षसानां हन्ता‡ "वरेण्यः" सर्वैर्वरणीयः "मदः" मदकरः "यः" रसोविद्यते तेन रसेन "अन्धसा" आदरणीयेन¶ "पवस्व" क्षर॥ ४॥ ४

---

* "आङ्गिरसः"-इति ऋषि-मैगेयः।

† देवावीरिति 'वीकान्तौ (अदा० उ०)'-इत्यस्य रूपम्, कान्तिरिच्छा। देवान् वेति इच्छेति स देवावीः, अन्येषामपीति (६, १, १३७) पूर्वपददीर्घः।

‡ "अघशंसः"-इति स्तेननामसु त्रयोदशं नैघण्टुकम् (३, २४)। 'अघं पापं, यः शंसति, तस्य हन्ता'—इति वि०।

¶ आदरणीयेनान्नेनेति भावः। "अन्धसा अन्नेन'-इत्येव वि०।

१ २ ३ १ २
हरिरितिकनिक्रदत् ॥ ५ ॥ ५ *

५ र र १ २
(वैष्टम्भे द्वे ॥) तिस्रोवाचाः। उदाइ। उदा३१उ।
२ ५ र र १ २ २
वाये३। रा२३४ते। गावोमिमा। तिधाइ। तिधा३१उ।
२ ५ र २ १ २
वाये३। ना२३४वाः। हरिरिती। कनाइ। कना३१उ।
२ ५
वाये३। का२३४दात् ॥ ७ ॥

५ र र १ २ २ १र र २
तिस्रोवाचाः। उ३हाइरा३ते। गावोमिमान्तिधा१इ-
२ २ र ३ ५ १ २ ५र र
ना३वाः। हरिरितो२३४हाइ। का२ना२३४ओहोवा।
७ ५
क्रा२३४दात् ॥ ८ ॥

२ र १ ५ २ र १ १र
(प्राष्ठौ द्वे द्वे ॥) तिस्रोवाचो२३४हाइ। उदीरताइ। गा-
र १ ५ २ र १ २ १ ५ २
वोमिमा२३४हा तिधेनवाः। हरिराइतो२३४हाइ। क-
१ २ १ २ ५र र २ १ २ र १ २ १ १
नाये३। क्रा२दा२३४ओहोवा। अस्मभ्यन्नातुवित्तमा२-
१ १ १
३४५म् ॥ ९ ॥

---

* ऋ०९,३,१४,१ = ऋ०६,८,२२,४ = ऊ०१,१,१० ;—७,१,१६ ;— ९,१,७ ; —१५,१,१९ ;—२०,१,१०—११ ; —ऊह्ये १,१,१२।

५ ४र र १ ४५र ४ ५ २र र
तिस्रोवाचउदीरतो । वाहाइ । गावोमिमा३ ।
१ १ २ ५ ४ ५ ४ ५ १ २ ५र र
तीर्धेनार३४वाः । हारीराइती । का२ना२३४ओहोवा ।
२ ५
क्रा२३४दात् ॥ १० ॥

४ ३ र ४ १ २र ५
( क्षुल्लकवैष्टम्भम् ॥ ) तिस्रोऽ५वा । चा३उदीरताइ ।
१ र १ १ १ १ २ २ १ २
गावोमिम । तिधाइना१वा२३ः । होवा३हाइ । हराइरा१-
१ २ २ १ २ १ २ ५र र
इतौर३ । होवा३हाइ । कनाये३ । क्रा२दा२३४औहोवा ।
२ ५
दौ२३४म्राः ॥ ११ ॥

४ र र र ४ २र१र
( पार्थौहम ॥ ) तिस्रोवाचा५उदीरताइ । गावोमिम-
२१र २ १ ५ १
त्रिधेनवः । हरिरा२३इती । कनौ२ । ऊवाइ । हो३वा३ ।
१ २ ५र र २र १ २ १ २ ३१११
क्रा२दौ२३४ओ होवा । हाओवा । ओवा२३४५ ॥ १२ ॥ १

त्रितऋषिः* । "तिस्रोवाचः" ऋगादिभेदेन त्रिविधाः†

*—"आप्त्यः"—इति ऋषि-भेदः ।

†—"चत्वारि वाक् परिमिता"-इत्यादौ ( ऋ० १, २२, ८, ४५ ) श्रुतौ तु व्याव-हारिका वाचा वाचां चतुष्ट्वम् । तथाच तत्रैव यास्ककृतं व्याख्यानम्—"ओङ्कारो-महाव्याहृतयश्चेत्यार्षम् ; नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः ; मन्त्रः कल्पो ब्राह्मणं, चतुर्थी व्यावहारिकीति याज्ञिकाः ; ऋचो यजूंषि सामानि, चतुर्थी व्यावहारि

अथ षष्ठी ।

१ २   ३ १ २ ३ १ २ ३ १ १

इन्द्रायेन्दोमरुत्वतेपवस्वमधुमत्तमः ।

३ २ ३ १ २ ३ १ २

अर्कस्ययोनिमासदम् ॥ ६ ॥ ६*

५ २ २   २ १   २ १

(इषोवृधीयम् ॥) इन्द्रायेन्दाउ । मरुत्वताइ पवस्वा-

"उदीरते" स्तुतीः प्रोद्गायन्ति ऋत्विजः । "धेनवः" आशिरेण प्रीणयित्र्यः "गावः" "मिमन्ति"† शब्दायन्ति दोहार्थम् । "हरिः" हरितवर्णः सोमश्च "कनिक्रदत्"‡ शब्दं कुर्वन्ति गच्छति कलशम्¶ ॥ ५ ॥ ५

---

* उ०४,१,११,१= ऋ०७,२,४०,१=क०२,१,१६—१९—१८—१९—१०—२१; —८,१,४;—१०,२,४;—१६,१,१२;—२२,२,१६ऋक्षु १,१,१०।

कीति नैरुक्ताः ; सर्पाणां वाग् वयसां क्षुद्रस्य सरीसृपस्य, चतुर्थी व्यावहारिकीत्येके । पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मप्रवादाः । अथापि ब्राह्मणं भवति—सा वै वाक् सृष्टा चतुर्धा व्यभवदेष्वेव लोकेषु त्रीणि, पशुषु तुरीयम् ; या पृथिव्यां साग्नौ सा रथन्तरे, यान्तरिक्षे सा वायौ सा वामदेव्ये, या दिवि सादित्ये सा बृहति सा स्तनयित्नौ ; अथ पशुषु ततो या वागत्यरिच्यत तां ब्राह्मणेष्वदधुस्तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति—या च देवानां, या च मनुष्याणाम्"-इति नि० पू०१, ९ ।

†—'मा शब्दे (जु० प्या०)'-इत्यस्य पुरुषव्यत्ययेन (३, १, ८५) रूपम् ।

‡—निरन्तरशब्दकरणेऽर्थे विद्यमानस्य भ्वादेरुभयपदिनः क्रन्देः सार्वकालिके (३, ४, ६) लुङि "दाधर्त्ति (७, ४, ६५)"-इत्यादिना च्लेरङ् द्विर्वचनमभ्यासस्य चुत्वाभावो निगागमश्च निपातितः ।

¶—द्रोणमिति प्रसिद्धम् ।

मा२। धुमत्तमाः। अर्कस्ययो२। निमा२३। सा२-
दा२३४ औहोवा। इषीवृधे१ ॥ १३ ॥

(इन्द्रसाम ॥) आ२३४इन्द्रा। या२३४इन्द्रा। मरु-
त्वते३। पा२३४वा। स्वा२३४मा। धमात्तमा३ः। आ-
२३४र्का। स्या२३४ये। निमासदा२३४५म् ॥ १४ ॥

(वैश्वदेवं ॥) इन्द्रायाइन्दो२३। हा। औ३होवा।
मरुत्वाते२३। हा औ३होवा। पवस्वामा२३। हा।
आ३होवा। धुमत्तामा२३ः। हा। औ३ होवा। अर्का-
स्यये२३। हा। औ३होवा। निमासादा२३म्। हा।
औ३होवा३४३। ओ२३४५इ। डा ॥ १५ ॥

इन्द्रायेन्दो। एपु। मरु। त्वताइ। पवस्वमधु-
मत्तार३माः। ऊवाइ। हो३वा। अर्कास्या२३यो। ऊ-
वाइ। हो३वा। निमासा२३दा३४३म्। ओ२३४५इ। डा।
॥ १६ ॥

५ र र र   २ १ २ २
(आग्नेये द्वे ॥) इन्द्रायेन्दोहाउ। म। रु। त्वते३हाउ।
१ २ १ ७ २ १ ७ २
पवस्वमधु। मा। तमार२३हाउ। अर्का। स्ययोर२३हार३इ।
१ ५ ४ ५
निमार२३। होर२३४वा। सा५दोईहाइ॥ १७॥

५ र र ४ ५ ४ ५ २ १ २ १ २
इन्द्रायेन्दोवा। ओवा। मरुत्वतोवा। ओवा।
१ २ १ २ १ २ २ ४ ५
पवस्वमोवा। आवा। धुमत्तमोवा। ओवा३। अर्काहाउ।
४ ५ २ १ २ १ ५ ४ ५
स्ययोहाउ। निमोवा३ओर२३४वा। सा५दो६हाइ॥ १८॥

४ ५र र र ४ ५ र ४ १
(वैश्वदेवम् ॥) इन्द्रायेन्दोमरुत्वाते। ओहाइ पव-
२ १ २ ऽ २ २ ५ १ ७
स्वमधमत्तमः। ओ३हा३४३। ओ३४हा। आर्कस्यायोर२३।
१ २ ५र र २ ३ ५
नार२इमा२३४ओहोवा। उप्। सार३४दाम्॥ १९॥

५ र र र ५ १ २
(आग्नेयम् ॥) इन्द्रायेन्दोमरुत्वाईताइ। पवस्वम।
१ २ ५ र ५ ४ ५
धुमात्ता१मार२३४ः। अर्कस्ययोनिमा६हाउ। सा५दोईहाइ
॥ २० ॥ ६

कश्यप ऋषिः*। हे "इन्दो" सोम!† "मधुमत्तमः"

---

* "मारीचः" इति ऋषि-नैगेयः।

† ऋ० ९९४ पृ०३०।

अथ सप्तमी।

१ २ ३ १र २र३ १र २र ३ २
असाव्यꣳशुर्मदायाप्सु दक्षोगिरिष्ठाः।
३ २उ ३ १ २
श्येनोनयोनिमासदत्॥ ७॥ ७*

४ ५ १ २
(शेश्रवानि चत्वारि॥) आसा। वियꣳशुर्मा३१उवा२३।
५ ४ ५ ४ ५ २ २ १११
दा२३४या। आप्सुदाक्षाः। गिरा३१उवायि३। ष्ठा२३४५ः।
२१र २ ५
श्येनोना२३यो। निमा३१उवा२३। सा२३४दात्॥ २१॥
४ ५र ४ १ ० १ ० १
असाविया। शुर्मदा२। य। आप्सुदाक्षा२ः। गा-
२र १ २ १ २ ५ ४
इरिष्ठाः। श्याइनो१नायो२३। निमो२३४वा। सा५दो-
५
६हाइ॥ २२॥

अतिशयेन मधुमान् "अर्कस्य" अर्चनीयस्य† यज्ञस्य "योनिं" स्थानं "आसदम्"‡ उपवेष्टुं "मरुत्वते" "इन्द्राय" इन्द्रार्थं "पवस्व" क्षर॥ ६॥ ६

---

* छ० ३,२,१६,१=छ० ७,१,२५,३,=आर १,२,२३=ऊ ३,१,१०;—७,२,१९;—१६,१,४;—२०,३,२।

† प्र० ८८८ पृ० ६०। अर्कइति अर्चते रूपम्।

‡ 'आसदम् आसीद' इति वि०।

५ र  ३ २ ३  ५  १ ७  २  ३  १
अस । वियाओ२३४वा । भूमंदाया । ओ२३४वा । आ-
२ ३  ५  २ १र  २ ३  ५  २र१र  र
प्सा ओ२३४वा । दक्षोगिराइ । ष्ठाओ२३४वा । श्येनो नयो-
र २ ३ १ १ १ १ १
निमासदा२३४५त् ॥ २३ ॥

५ र  १ २ ३  ५  २१  २  ३  ५
अस । वियौवाओ२३४वा । भुमंदायौ । वाओ२३४वा ।
३ २ ३  ५  १  २  ३  ५
अप्सु । दक्षौवाओ२३४वा । गिराइ । ष्ठौवाउ२३४वा ।
र  ३ २ ३  ५  १  १ ३  ५
श्ये नः । नयौवाओ२३४वा । निमा । सादौवाओ२३४वा ।
४
होपुइ । डा ॥ २४ ॥

४ ५र  ४  ५  २
( च्यावनानि चत्वारि ॥ ) अस । व्युङ्वाहाइ । अउ-
१ रर  र  र  १  २
भुर्मदायाप्सुदक्षोगिरिष्टाउङ्वा२३होइ । श्या२३इनो३ ।
१ ३  ५र र  २ २र २ १ १ १ १ १
ना२यो२३४औहोवा । निमासदा२३४५त् ॥ २५ ॥

४ ५र  ४  ५र ४  ५  १  २  १
असाव्यउभुः । औहोवाहाइ । मदा२३या । आ-
२र  २  १  २ २  १  ३  ५र र
प्सुदक्षोगिरिष्ठाः । श्याइनोना३यो३ । ना२इमा२३४औहो-
२  ३  ५
वा । उप् । सा२३४दात् ॥ २६ ॥

अथाष्टमी।

२ ३ १ २ ३ १ २ ३ १ २
पवस्वदक्षसाधनोदेवेभ्यःपीतयेहरे।

३ २ २ ५ २ ४ ५ २ ४
इहा३१२३४। इहा। साव्य९श्रुर्मदाय। इहा।

२ १ २ २ ३ ५ १२ १२ ३ २
अप्सुदक्षोगिरिष्ठा३४५ः। ई२३४ हा। श्येनोनयोरनिमा-

२ ५ १ ३ २ ३ ५
३४५। ई२३४हा। आ२सदा३४५त्। ई२३४हा॥ २७॥

२ ५ २ ५ ५
असा२३४। विय९श्रुः। मदा२३४याई। हाउ।

२ २ ५ २ १ ५ १ २
आप्सुदा२३४क्षाः। गिराइष्ठा२३४हाइ। श्याइनोना३-

२ १ २ १ ५ ५
यो३। नाइमा२३हा३४३इ। सा२३४दो६हाइ॥ २८॥ ७

जमदग्निर्ऋषिः*। "गिरिष्ठाः" पर्वते जातः "अंशुः" सोमः "मदाय" मदार्थं "असावि" अभिषुतः। "अप्सु" सतीवरीषु "दक्षः"† प्रवृद्धश्च भवति। किञ्च। "श्येनोन" यथा श्येनो वनादागत्य स्थानमासीदति तद्वद् "अयं" सोमः "योनिं" स्वकीयस्थानम्‡ "आ सदत्"¶ आसीदति॥ ७॥ ७

---

* "भार्गवः"-इति ऋषि-नैगेयः।

† दक्षइति बलनामसु नैघण्टुकम् २, ९। 'दक्षः शोधुः'-इति वि०।

‡ द्रोणकलशमिति यावत्।

¶ लेटो रूपम् (३, ४, ७)

१ १ २ ३ २ ३ १ २
मरुद्भ्योवायवेमदः ॥ ८ ॥ ८ *

४ ५ र ४र ५ १
( प्राजापत्ये द्वे ॥ ) पवस्वदौ । हौहोवाहाइ । चा-
१र ऽ २ १ र ५र
साधनाइः । औ३हो३४इ । औ३हो३४इ । औहो ।
३र १ र १र १ १ १ ३र २ ऽ २ १
वाहाइ । देवेभ्यःपाइ । तयेहरा३इ । औ३हो३४इ ।
र ५र ३र १ १ २र ऽ २ २ र ५र
औहो । वाहाइ । मरुद्भ्योवा३ । औ३हो३४इ । औहो ।
३र १ १ ३ ५ र र ३ ५
वाहा३इ । या२वा२३४औहोवा । मा२३४दाः ॥ ९ ॥

४ ५ ४र ५ ५ २र १र र १
पवस्वदक्षसाधनः । ओ६वा । देवेभ्यःपीतया२ओइ ।
१ १ २र १ ४ ५ ४
हरा२इ । मरुद्भ्योवा२ । ओ२३ । यवोवा । मा५दो६
५
हाइ ॥ १० ॥ ८

दृढ़च्युत आगस्त्य ऋषिः । हे "हरे" हरितवर्ण पाप-हर्तर्वा सोम ! "दक्षसाधनः" दक्षो बलन्तस्य साधकः † "मदः" मदकरस्त्वं‡ त्वं "पवस्व" क्षर । किमर्थम् देवेभ्यः इन्द्रादिभ्यः

* उ०१,१,१०,१ = ऋ० ९,८,१५,१ = उ० १,२,८ ;—१५,२,९ ;—१६,२,१ = ऊह्य १.१,९ ।

† 'दक्षसाधनः बलसाधनः'-इति वि० ।

‡ 'मदः मदनीयः'-इति वि० ।

अथ नवमी।

१ २ ३ १ २ ३ २ ३ २ ३ १ २
परिस्वानोगिरिष्ठाःपवित्रसोमोअक्षरत् *।
१ २ ३ २
मदषुसर्वधाअसि॥ ९॥ ९†

४ ५ २र २ र
( आद्यं वैदन्वतम्॥ ) पारी। स्वाणोगिरिष्ठाः। प-
१ २ ५ २र १ १ २ ऽ
वा२इत्रे२३४सो। मोअचारा२त्। मदाइषूसा३। ई३-
१ २ १ ५ ४ ५
या३। वंधो२३४वा। आ५सो६हाइ॥ ३१॥

४ ५ २र र र
( द्वितीयं वैदन्वतम्॥ ) प। येंपारी। स्वानोगिरिष्ठाः।
१ ३ ५ २र १ १ २ २
पवा२इत्रे२३४सो। मोअचारा२त्। मदाइषूसा३हा३।
१ ३ ५र र २ १ २ १ १ १ १
वां२धा२३४औहोवा। ए३। असी२३४५॥ ३२॥

"पीतये" ‡ पानाय। तथा "मरुद्भ्यः" वायवे च पीतये पानाय "पवस्व" चर॥ ८॥ ८

---

* "सोमो अचाः"-इति उत्तर-व्याख्याने वि०।

† उ० ४,१,१७,१=ऋ० ४,८,८१=ऊ० ३,२,८—९—१० ;—८,१,९ ;—९,२,६ ;—१०,२,१८ ;—१२,१,४ ;—१४,१,२ ;—१५,१,८—९—१०—११—१२ ;—१५,२,७= ऊह्य २,१,१० ;—२,२,१३ ;—४,१,१४ ;—६,१,१२।

‡ "मन्त्रे वृषेषपच ( ३, २, ९६ )"-इति क्तिन्न दातव्य।

( तृतीयं वैदन्वतम् ॥ ) पाऽ५री। स्वानो३गा३इ रिष्ठाः। पवित्रे सो। मो अक्षरात्। पवित्रे। सोमो२३। क्षा-रात्। ओइ। मदौ। वा३४३ ओ२३४वा। षुवा। सर्वधाः। असाये३। मा२दा२३४औहोवा। ए३। षुसर्वधा असी-२३४५॥ ३३॥

( चतुर्थं वैदन्वतम् ॥ ) औ३होइ। इहाहाहाइ। औ२हो२३४वा। पराइस्वा२३४नो। गिरा२३४इष्ठाः। पावित्रे२३४सो। मोअक्षा२३४रात्। मदाइषू२३४सा। वंधाआ२३४सी। औ३होइ। इहाहाहाइ। औ२हो-२३४५वा६५६। ए३। उपा२३४५॥ ३४॥

( आङ्गिरसस्य पदस्तोभौ द्वौ ॥ ) पा। यैस्वानाः। गा२इ। रिष्ठा२या। हाहाइ। ओवा२३होइ। पावित्रे सो। मोअक्षारा२त्। हाहाइ। ओवा२३होइ।

२ २ २र २ १ १ २ १ ५

मदा२इषुसा। हाहाइ। ओवा२३हो। वंधो२३४वा।

४ ५

आ५सो६हाइ ॥ ३५ ॥

५ र र र र ४ ५ १ २

पर्य्यौहोवाहाइस्वाना:। गा२इ। रिष्ठा२या। ओ२३४।

२र २ २र २ १ २ १ २ १ २ १ ७

होहोइ। हाहा। होवा। होवा। पवित्रेसो। मोअ

२ २र २ २र २ १ २ १

चारा२त्। ओ२३४। हाहोइ। हाहा। होवा। मदा

२ २ २ २र २ २र २ १ २ १

२इषुसा। ओ२३४। हाहाइ। हाहा। होवा। हो

२ २ १ ५ ४ ५

वा३। वंधो२३४वा। आ५सो६हाइ ॥ ३६ ॥ ९

अस्याः परस्याश्च कश्यपोऽसित* ऋषिः। अयं "सोमः" "पवित्रे"† "पर्य्यचरत्" परिचरति। "स्वानः" सुवानः‡ अभिषूयमाणः "गिरिष्ठाः" गिरिस्थायी गिरौ वर्त्तमान इत्यर्थः। स त्वं "मदेषु" मादकेषु स्तोतृकेषु "सर्वधा असि" सर्वस्य धाता दाता वा भवसि॥

"स्वानः"-"सुवानः"-इति, "अचरन्"-"अचा"-इति च साम्नृचः पाठः ॥ ८ ॥ ९

---

* अथवा कश्यपो देवलः (ऋ० अनु०)।

† 'पवित्रे ऊर्णमये'-इति वि०। पवित्रस्य दशापवित्रमित्यनुपदम् (इतश्चतुर्थे) वक्ष्यति सायणः।

‡ साप्तमिकबहुलवचनात् उवङ् विकल्पः (७, ३, ९७)।

अथ दशमी।

१ २ ३ २ ३ २ ३ १ २र ३क २र ३ २
परिप्रियादिवःकविर्वयाꣳसिनप्त्योर्हितः।
३ १ २ ३ १ २
स्वानैर्यातिकविक्रतुः॥ १०॥ १०†

॥ चतुर्थ-दशति ॥

५ र ४ ५ १ र
(पूर्व्वमौर्णायवम्॥) परिप्रियादिवःकावीः। वयाꣳ
र र र २ १ १ ऽ
सिनप्तोर्हितः। स्वानैर्या२३ती। आया२। इया २ई-
२ ३ २१ ३ ५र र ३ १११११
३या। कविक्रतोर२। या२३४औहोवा। ई२३४५॥ ३७॥

४ ४ १ ऽर
(उत्तरमौर्णायवम्॥) परिप्रिया५दिवःकवाइः। वया
र २ १ र र २ १ र र २ १
२होऽ१वाꣳसिनप्त्रे ोवोर्हितः। स्वानैर्या२३ती। ऊवा।
२ १ २ १ ऽ २ ३ २२
होवा। होवा। ऊवा२इ। ई३या। कविक्रतो२।
३ ५र र २ १ १ १ १ १
या२३४औहोवा। ई३या२३४५म्॥ ३८॥ १०

॥ इति त्रयोदशस्यार्द्धः प्रपाठकः॥

---

* "सुवानोयाति"-इति व०-व्याख्याने वि०।

† ज० २,१,१९,१ = ऋ० ६,७,२२,१ = ऊ० २,२,१५,—७,१,८;—१५,२,१०;—१६ ८,११;—२०,१,१६=अक्षु ५,१,६।

अथ द्वितीये खण्डे—

सैषा प्रथमा।

१ २ ३२　３ २ ३ १ २　３ १ २
प्रसोमासोमदच्युतःश्रवसेनोमघोनाम्*।

３ २　３ १ २
सुताविदथेअक्रमुः ॥ १ ॥ ११ †

२ ३　५　२ १ २
ओं ॥ ( सौभरं द्वे ॥ ) प्रसोमार२३४साः। मदच्युतः।

कविर्मेधावी। "कविक्रतुः" अन्तःप्रज्ञः क्रान्तकर्मा वा सोमः "नप्तोः" अधिषवणफलकयोः ‡ "हितः" निहितः। "दिवः" द्युलोकस्य "प्रिया" प्रियाणि "वयांसि" वयन्ति गच्छन्तीति वयांसि ग्रावाणः ¶ तानि। [तथाच मन्त्रवर्णः—"श्येना अतिशयः पर्वतानां ककुभः"-इति।] "स्वानैः" अभिषुण्वद्भिरध्वर्य्यभानि "परियाति" गच्छति॥

"स्वानैः"-सुवानैः-इति साम्नऋचः पाठः॥ १० ॥ १०

इति श्रीसायणाचार्य्य-विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य प्रथमः खण्डः॥ १ ॥

---

* "मघोनः"-इति ऋ०, ऊ०-व्या० वि० च।

† ऊ० १,२,२१,१=ऋ०६,८,२२,१=ज० १,२,१४ ;—२१,१,२०।

‡ 'द्यावापृथिव्योः अहोरात्रयोर्वा'-इति वि०।

¶ 'वयांसि अन्नानि पक्षिणो वा'-इति वि०। ग्रावाणश्च सोमाभिषवार्थानि पाषाणविशेषाणि "अग्निहृत्ये"-इति ऋचो व्याख्यानं द्रष्टव्यम् (प्र० १०१ पृ०)। निघण्टौ तु ग्रावइति पर्वतइति च मेघनामसु पठ्यते १, १०।

अथ द्वितीया।

१ २ ३२ ३ २ ३ १ २ ३ १ २
प्रसोमासोविपश्चितोपोनयन्तऊर्मयः*।
१ २ ३ १ २
वनानिमहिषाइव ॥ २ ॥ १२ †

१ २ २ १ ३ ५ २ ७
औ२३होवाइ। अवा२सा२३४इनाः। ओइमघोना२म्।
१ १ ३ ५२ २ २२ ३ १ १ १ १
सुता२३ः। वा२इदा२३४औहोवा। थे अक्रमू२३४५ः ॥१॥११
५२ २ १ २ १ २ १
प्रसोमासाः। वाइपश्चितः। आपो१नाया२। ता

श्यावाश्व ऋषिः‡। "सोमासः"¶ सोमाः "मदच्युतः" मदस्राविणः "सुता" सुतः§ अभिषुतः सन्तः "मघोनां" हविष्मतां॥ "नः" अस्माकं सम्बन्धिनि "विदथे" यज्ञे "श्रवसे"** अन्नाय कीर्त्तये वा "प्राक्रमुः" प्रगच्छन्ति॥

"मघानां"—"मघोनः"-इति पाठौ ॥ १ ॥ ११

---

* "अपांनयन्त्यूर्मयः"-इति ऋ० ख, उ०-व्या० वि० च।

† उ० १,१,१९,१= ऋ० ६,८,२३,१= ऊ० ६,२,१२;— ११,२,११;—१४,१, १२—१३—१४;—१८,१,११;—१९,२,१५—१६।

‡ "आत्रेयः"-इति ऋषि-निर्णयः।

¶ असुकि रूपम् (७, १, ५०)।

§ सुतादति आलेरूपम् (७, १, ३९)।

|| मघं धनम्, इह च तत् हवीरूपम् लक्ष्यमिति भावः।

** "विदथः"-इति यज्ञ-नामसु पञ्चमं नैघण्टुकम्।

अथ तृतीया ।

१२ ३ १२ ३२ ३१ २ ३ ३ १ २
पवस्वेन्दोवृषासुतःकृधीनोयशसोजने ।
३ २३११
विश्वाअपद्विषोजहि ॥ ३ ॥ १३ *

१ ३२ १ २ १ २ २ १२र
ऊर्मयः । वानाऽ१निमा२ । आऔ३हो । हिषाइव ।
१ २ १
इडा२३भा३४३ । ओ२३४५इ ॥ २ ॥ १२

त्रितऋषिः† । "विपश्चितः" मेधाविनः "सोमासः" सोमाः "प्र नयन्त" पात्राणि प्रति गच्छन्ति । किमिव ? "अपऊर्मयः" [अपइति षष्ठी व्यत्ययेन द्वितीया ‡] । [अपामूर्मयः अतएव बह्वृचाः—अपान्नयन्तीति पठन्ति] ते यथा सततमुद्भवन्ति तद्वत् । [बाहुल्येऽयं दृष्टान्तः । अर्थतो गमने दृष्टान्तान्तरमभिधीयते- "वनानि महिषाः" प्रवृद्धा मृगा इव । अथवा स्वाश्रयात् प्रद्रवणे प्रथमो दृष्टान्तः । द्वितीयस्तु दशापवित्रादधःप्रदेशे ॥ २ ॥ १२

---

* उ० २,१,२,१= ऋ० ७,१,२२,३ ।

† "आप्त्यः"-इति ऋषि-निर्गेयः ।

‡ "व्यत्ययो बहुलम्"-( मै० ३, ३, ८ ) व्याख्यातश्चैवं पुरस्तात् ( प्र०२,१५पृ०—) मृगेषु यो महान् मृगः तस्य तु नाम्नौ महिष इति प्रसिद्धम् । तथाहि—

"ब्रह्मा देवानाम्पदवीः कवीनामृषिर्विप्राणां महिषोमृगाणाम्"

—इति ऋग्वेदीया श्रुतिः ( ८, ५, ११, ६ ) । "महिषो मृगाणामित्येषन् हि महा भवति मृगाणाम्"-इत्यादि तद्व्याख्यानं यास्कस्य ।

अथ चतुर्थी ।

१२ १ २ ३ १ २ ३ १२
वृषाह्यसि भानुना द्युमन्तन्त्वा हवामहे ।
१ २ र ३ १ २
पवमानस्वर्दृशम्* ॥ ४ ॥ १४†

४ र र ४ १ १र
( वृषकाणि त्रीणि ॥ ) पवस्वेदो५ वृषासुताः । क्रधी
र र २ २ ३ ५ १० २
नोयशसोजनाये३ । वाइश्वा आ२३४पा । द्वा२इषा२३४
५र र ३ ५
औहोवा । जा२३४हो ॥ ३ ॥ १३

४५र ४ २ १र २ १ र २
वृषाह्यिया । सिभानू२३ना । द्युमन्तंत्वाहावा१माहा
३२ १ २१ ५ ३ ५
२३४इ । पवा३ । मानसुवे२३४वा । हृ२३४शाम् ॥ ४ ॥

अमहीयुर्ऋषिः‡ ॥ हे "इन्दो" सोम ! "सुतः" अभिषुतः "वृषा" सेक्ता त्वं "पवस्व" धारया क्षर । "जने" जनपदेषु "नः" अस्मान् "यशसः" यशस्विनः "क्रधि"¶ कुरु । "विश्वा" सर्वान् "द्विषः" द्वेष्टॄन् शत्रून् "अप जहि" मारय ॥ ३ ॥ १३

---

* "पवमानस्वाध्यः"-इति ऋ० ।

† उ० २,१,४,१ = ऋ० ७, १,१,४ ।

‡ "आङ्गिरसः"-इति ऋषि नैगेयः ।

¶ 'श्रुशृणुपृकृवृभ्यश्छन्दसि (६, ४, १०२)"-इति सिद्धं क्रधीति । ऋचि तु "क्रधी"-इति दीर्घान्तपाठः, स च "द्व्यचः (६, ३, १३५)"-इति योगविभागात् साध्यः ।

अथ पञ्चमी।

१२ ३१२ ३१ २३ २३१
इन्दुःपविष्टचेतनःप्रियःकवीनाम्मतिः *।

४र र४ २१ २र १२र र
वृषाद्दियापुस्विभानुना। द्युमन्तंत्वाहवारमहे।

२ १ १२र १२
हा२इ। ऊ२। हो३वा। पवमानस्वर्दृशम्। हा-

२ २ १२
२इ ऊ२। हो३वा। ऊवो३४५इ। डा॥५॥१४

भृगुर्ऋषिः †॥ हे "सोम!" त्वं "वृषा" अभिलषितफलानां वर्षिता "असि हि" भवसि खलु। तस्मात् हे "पवमान" पूयमान पुनान‡ वा सोम! "स्वर्दृशं" सर्वस्य द्रष्टारं¶ "भानुना" तेजसा§ "द्युमन्तं" दीप्तिमन्तम् अतिशयेन तेजस्विनमित्यर्थः। स्तुतिमन्तं वा "त्वा" त्वां "हवामहे"‖ यज्ञेषु आह्वयामहे॥४॥१४

---

* "मती"-इति क०।

† "वारुणिः भार्गवोजमदग्निर्वा" इति ऋषि-नैगेयः।

‡ अभिषुत शोधित इत्यर्थः।

¶ प्र०४८०पृ० द्र०।

§ भानुइति निघण्टावहर्नामसु (१,९) दृश्यते परमिह सर्वत्र रश्मिवाचकत्वेन व्याख्यातमाचार्येण—(प्र० २१९ पृ०, ४५८ पृ०)।

‖ कः सम्प्रसारण-बाहुल्येन रूपमिदम् (६, १, ३४)।

२ १र२र३ १ २
ष्वजदश्वरथीरिव ॥५॥ १५ *

२ २ ३र ४ ५ ४ ५
(कौम्भ्यस्य सामानि त्रीणि ॥) इन्दु रौहोवाहाइ । पावी ।
२१ २ ५ २र १ ५ २ १
ष्टचारइ । तनोर२३४हा । हाहोइ । होर्हा । प्रियाः-
२र २र २३ ५ २र १ ५ २
कवी । नाम्न । तिरो२३४हा । हाहोइ । होर्हा ।
१ २ ५ २र र ५ २ १
ष्वजारत् । अश्वोर२३४हा । हाहोइ । होर्हार । रार
२ ५र र ३ ५
यार३४ औहोवा । ई२३४वा ॥ ६ ॥

४ ५ ४र ५ ४ ५ ४ ५ २ २
इन्दुःपविष्टचेतनःप्रियःकवाइ । ऊ३म् ऊम् । नाम्ना-
५ १ २ ५ २ १ ३
२३४तौः । ष्वजादा२३श्वाम् । ऊ३म् ऊ३म् । रारथा-
५र र ३ ५
२३४औहोवा । ई२३४वा ॥ ७ ॥

४ ५ ४र ५ ४ ५ ४ ४र ५ ४ ५ ४ ४
इन्दुःपविष्टचेतनःप्रियःकवीनाम्नतिःष्व । जा५दश्वाम् ।
१ १ १ ३ ५र र ३
ओवा२३ । ओवा२३ । रार था२३४ अ होवा । ई २ ३ ४
५
वा ॥ ८ ॥ १५

---

* ऋ० ७,१,३३,५ ।

अथ षष्ठी ।

१ २ ३ २ ३ १ २ ३ १र २र ३ २
असृक्षतप्रवाजिनोगव्यासोमासोअश्वया ।

३ १ २ ३ १र २र
शुक्रासोवीरयाशवः ॥ ६ ॥ १६ *

५ २ ४ ५ ४र ५ १
(कार्त्तवेशस्य त्रीणि ॥) असृक्षा३ताप्रवाजिनाः । गा-

१ र १ २ १
व्या२सोमा२ । सोअश्वयाश१क्रा२सोवी२ । रया२-

१ २ १
शवः । ओ२३४५इ । डा ॥ ८ ॥

५ र ५र २ १र र र र
असृक्षताप्राइवाजिनाः । गव्यासोमासोअश्वया२३-

अस्या उत्तरस्याश्च कश्यपऋषिः† । "चेतनः" प्रज्ञापकः "प्रियः" देवानां प्रीतिकरः "इन्द्रः" सोमः "कवीनां" क्रान्तकर्मणां स्तोतॄणां‡ "मतिः"¶ मत्या स्तुत्या "पविष्ट"§ पवते । "अश्वं" हयं "रथीरिव" रथीव ऊर्मिं॥ "सृजत्" सृजति ॥ ५ ॥ १५

---

* उ० ४,१,२,१=ऋ० ७,१,२६,४ ।

† "मारीचः"-इति ऋषि-निर्णयः ।

‡ प्र०९२८ पृ० द्र० ।

¶ स्वादेशे रूपम् (७,१,३९) ।

§ लेटः सिप्पक्षे रूपम् ( ३, ४, ९४ ) ।

॥ "पङ्क्तीकृतानामश्वानां नमनोन्नमनाकृतिः। अतिवेगसमायुक्ता गतिरूर्मिरुदाहृता"-इत्यश्वचिन्तामणिः ।

अथ सप्तमी।

१२ ३ १ २ ३ १र २र ३ १ २
पवस्वदेवआयु*षगिन्द्रङ्गच्छतुतेमदः।
३ १र २र ३ १ २
वायुमारोहधर्मणा॥ ७॥ १७†

१ २ १र र २ २ १ १ २ ५र
हाइ। आउआसोवा३१इ। रया२३। आ२वा२३४औ-
र ३ ५
होवा। वा२३४भी॥ १०॥

३ ४ ३ ४र ५ २ ४ ५र २
आसृक्षतप्रवाजिनाः। ए३। गव्यासोमा। सो३
१ २ २ १ ३ ५ २ १ ५ ४
आश्वा३या। आउआ२सो२३४वी। रयो२३४वा। आ५-
५
वो६हाइ॥ ११॥ १६

"वाजिनः" बलवन्तः‡ "आशवः" वेगवन्तश्च "सोमासः" सोमाः "गव्या" गवेच्छया¶ "अश्वया" अश्वेच्छया§ "वीरया" वीरेच्छया च॥ "प्रासृक्षत" ऋत्विग्भिः प्रकर्षेण सृज्यन्ते॥ ६॥ १६

* "देवायु०"-इति ऋ०, उ०-आ० वि० च।

† उ० ५,१,१५,१ = ऋ० ७,१,३४,२ = ज० ४,२,१७—१८—१९—२० ;—१७,१,१ = ऊह्य १,२,२।

‡ 'अन्नवन्तः'-इति वि०।

¶ प्र०२२३ पृ० द्र०।

§ ४ प्र० ४११ पृ० द्र०।

‖ अश्वयेतिवत् साध्यः।

अथाष्टमी।

१ २ ३ २ ३ १२ २२ ३ २
पवमानोअजीजनद्दिवश्चित्रन्नतन्यतुम्।

४ ५ ४ ५ ३२ १ २
(आम्मदे ह्वे॥) पावस्वदि। वया३। वा२या२३४

५२२ ३ ५ ४ ५४५ ३१
औहोवा। यू२३४षाक्। आइन्द्रंगच्छा। तुता३इ।

१ २ ५२ २ ३ ५ १२
तू२ता२३४औहोवा। मा२३४दाः। वायू२ऽऽहो१इ।

१ २ ३१ १ २ ५२२ २
आ२३रो। ह्वधा३। हा२धा२३४औहोवा। मार-

५
३४णा॥ १२॥

३४५२ २ २ ३ ५ १२ १
पवस्वदेवए। चोएहो२३४या। आयुषागे२होए

ऽ २ १ २ १ ऽ २ १
२होइया। इन्द्रंगच्छतुतेमदए२होए२होइया। वायुमा-

२ २१ ५ ४ ५
रो३१२३। ह्वधो२३४वा। मापूणोईहाइ॥ १३॥ १७

निध्रुविः काश्यपऋषिः। हे सोम! "देवः" द्योतमानस्त्वं "पवस्व" धारया चर। अपिच तव "मदः" मदकारो रसः "आयुषक्" अनुषक्तं* यथा भवति तथा इन्द्रं प्रति गच्छतु। अपिच

---

* सचते रूपम्। आनुषक् आयुषक् इति शाखाभेदेन पठ्यते, "आनुषगिति नामानुपूर्वस्यानुषक्तंभवति"-इति वि०।

१ २ ३ २ ३ २
ज्योतिर्वैश्वानरम्बृहत् ॥ ८ ॥ १८*

४ ५ १२ ३ २ ३ ५
(जनित्रे द्वे ॥) पावा । मानो । अजीजार२३४नात् ।
२ १ ० २ १ १ ३
दिवश्चित्राम । नतन्यतुम् । ज्योतिर्वैश्वा२३ । ना२रा
५२ २ ३ ५
२३४औहोवा । बृ२३४हात् ॥ १४ ॥

५ २ १ २ २ १ २ १
पवमानाः । अजाइजाइनात् । दिवश्चित्रा२३ए
२ १ २ ३ ५ ३ ५ ३
हाइइ । नातन्या२३४तूम् । ज्यो२३४ती: । वा२३४इ
५ ४ ५ ४ ५
श्वा । नरोवा । बृ५हो६हाइ ॥ १५ ॥ १८

त्वं "वायु" "धर्मणा"† धारकेण‡ रसेन "आरोह" प्राप्नुहि ॥
"देवआयुषक्"-"देवायुषग्"-इतिपाठौ ॥ ७ ॥ १७

* उ० ३,१,२,१ = ऋ० ७,१,११,१ = ऊ० १२,१,१२ ;—१८,१,८—९ ।

† 'धर्मणा कर्मणा'-इति वि० ।

‡ धर्मणेति विविधं व्याख्यातम् । तथाहि—"जातः परेण (प्र०१४८ पृ०)"-इत्यत्र 'धर्मणा आधानादि-कर्मणा'-इति, "घृतवती (प्र० ७७७ पृ०)-इत्यत्र 'धर्मणा धारणेन'-इति इह 'धर्मणा धारकेण रसेन'-इति ; एव मुत्तरत्रापि (छ० ६, ६, २,८—उ० २, २, ९, २—३, १, १, ३—३, १, १०, ३—३, १, २०, ३—४, २, २, ७—७, १, ७, ३) स्वयमु द्रष्टव्यम् ।

अथ नवमो।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ १ २
परिस्वानास*इन्दवोमदायबर्हणागिरा।
१ ० ३ १ २
मधोअर्षन्ति†धारया॥ ९॥ १९ ‡

४ ५ २र र र र
(प्रक्रीडम्॥) पारी। स्वानास। इन्दवोमदायब।
१ १ ३ २ २ २ १ ५ ४
र्हणार३गिरा३४। मधो३४अर्षा३। तिधो२३४वा। रा
५
५योर्इहाइ॥ १६॥

४ ५ २र १र १
(सङ्क्रीडम्॥) पारी। स्वानासइन्दवाओवा२३हो

असहीयुर्ऋषिः¶। "पवमानः" सोमः "बृहत्" महत् "वैश्वानरं" वैश्वानराख्यं § "ज्योतिः" तेजः "दिवः" द्युलोकस्य "चित्रं" विचित्रं "तन्यतुं न" अशनिमिव॥ "अजीजनत्" अजनयत्॥ ८॥ १९

---

* "सुवानास"-इति,
† "सुताअर्षन्ति"-इति च } ऋ०, उ०-व्या० वि० च।

‡ उ० ४,२,१,७ = ऋ० ९,७,२४,४।

¶ "आङ्गिरसः"-इति ऋषि-नै०।

§ नि० दै० १, २१—२२ खण्डाद्रष्टव्याः।

|| 'तन्यतुं विस्तीर्णम्'-इति वि०। "तनोतेर्यतुच् तन्यतुर्वायुः रात्रिश्च (उ०४, २)"-इति सि० कौ०।

अथ दशमी ।

२ ३ १ २  ३ १र  १र ३ १र  ३र ३ २
परिप्रासिष्यदत्कविः सिन्धोरूर्मावधिश्रितः ।

१ र र १
वार३हा२ईया । मदायबर्हणागिरा । ओवा२३होवा
१ र र १
२३हा२ईया । मधोअर्षन्तिधारयाऽऽवा२३होवा२३हा
१ ३ ५र र २ ५
२ईया२ । वा२३४औहोवा । ऊ२३४पा ॥ १७ ॥

२ र ४ २ ४ ५
( निक्रीडम् ॥ ) पाऽ५री । स्वाना३सा३इन्दवाः ।
१ऽर १ऽर १ १ १ र
मदा२यवर्हणा२गिरा । मधो२३अर्षा । ऊर्मिरिवा२ ।
१ २ ३ र १ १ २ ३ ५ ४
ई३या । तिधारया । औ३होवा । हो५इ । डा ॥ १८ ॥
॥ १९ ॥

इयोः काश्यपोऽसितऋषिः* । "स्वानासः" सुवानाः अभिषूयमाणाः "इन्दवः" दीप्ताः । "वर्हणा" महत्या† "गिरा" स्तुतिरूपया वाचा "मधो" इति विभक्तिव्यत्ययः(३,१,८५) । मधवो मदकराः सोमाः "धारया" सह देवानां "मदाय" तदर्थं "पर्यर्षन्ति"‡ दशापवित्रादधः चरन्तीत्यर्थः ॥

"मधो"—"सुता" इति साम्नऋचः पाठौ ॥ ८ ॥ १९

* "देवलो वा"-इति ऋषि-नैगेयः ।

† 'वर्हणा परिवेष्टमनेनेति वि० ।

‡ 'ऋषगतौ ( तु० प० )'-इत्यस्य रूपम् । अर्षति, अरर्षति-इति च गतिकर्मसु नि० २, १४ ।

१ १र २र ३ १ २
कारुम्बिभ्रत्पुरुस्पृहम्॥ १०॥ २०†

॥ इति पञ्चम-दशति ॥

॥ इति पञ्चमः प्रपाठकः ॥

५ र २ १ १ र
(औशनम्॥) परिप्रासि। ष्यदत्कावी२ः। सिन्धो

र र ७ १र १ ३ ५ र र
रूर्मावाधिश्रिता२ः। कारु२३म्। बा२इभ्रा२३४औहो

२ १ ३ १ १ १ १
वा। पुरुस्पृहा२३४५म्॥ १८॥ २०

"परि प्रासिष्यदत्" परिस्यन्दते "कविः" मेधावी "सिन्धोरू-र्मावधिश्रितः" आश्रितः सन् "पुरुस्पृहं" बहुभिः स्पृहणीयं "कारुं" स्तोतारं‡ "बिभ्रत्" धारयन् सोमः परिस्यन्दते-इति सम्बन्धः॥

"कारुं"—"कारम्"-इति पाठौ॥ १०॥ २०

इति श्रीसायणाचार्य्य-विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य द्वितीयः खण्डः॥ १॥

---

* "कारं"-इति ऋ०।

† ऋ० ६,८,३,१।

‡ "कारुः"-इति स्तोतृनामसु तृतीयं नैघण्टुकम् (३, १६)।

अथ तृतीये खण्डे—

सैषा प्रथमा ।

२३ २३ २ ३२ ३१ २ ३१र ३र
उपोषुजातमप्तुरङ्गोभिर्भङ्गम्परिष्कृतम्।
१ २ ३ १ २
इन्दन्देवाअयासिषुः ॥ १ ॥ २१ *

२ १ र र
( यामानि त्रीणि ॥ ) इहा२इहा । उपोषुजातमा२
१ २ १ र
प्तुराम् । इहा । इहा२इहा । गोभिर्भङ्गम्परा२इष्कृ
१ २ १ र र १
ताम् । इहा । इहा२इहा । इन्दुन्देवाअया२सिषुः ।
२
इहा१ ॥ २० ॥

१र र १ र १
ऊपोषुजातमा२प्तुराम् । उपा । गोभा२३इर्हाइ ।
१ १ र१र
भङ्गम्परा२इष्कृताम् । उपा । इन्दु२३९होइ । देवा
१ २ २
अया२ । सिषुरा३१औवा२३ । ऊ२३४पा ॥ २१ ॥

४ ५र ४र ५ १ २ ३ ५ २
उपोषौ । होइजाताम् । आप्तू३राम् । औ३हो३
२ १ २ ३ ५ १ ७ १
वा३ । गोभिर्भा२३४ङ्गाम् । ओइपारिष्कृता२म् । इन्दू-
र२ ५र र २ र ३१११११
२३म् । देवा३४औहोवा । अयासिषू२३४५ः ॥ २२ ॥ २१

* उ० १,१,१८,२—५,१,२०,१ = ऋ० ७,१,२०,२ = ऊ० ६,१,५ ;—१९,३,११ ।

अथ द्वितीया।

२ १ २ ३ ३उ २ २ ३ १२
पुनानोअक्रमीदभिविश्वामृधोविचर्षणिः।
३ २ ३ १ २ ३ १२
शुम्भन्तिविप्रन्धीतिभिः॥ २ ॥ २२*

५ र र २ ३ ५ १
(वैरूपम्॥) पुनानोआ। क्रामीदा२३४भी। वि-
३ ५ २ ३ ५ १ ३ ५
श्वा२मा२३४र्द्धाः। वोचर्षा२३४णीः। शुभा२ता२३४इवी।
१ २ ५र र ३ ५
प्रा२घा२३४औहोवा। ती२३४भीः॥ २३॥ २२

अमहीयुर्ऋषिः†। "सुजातं" सम्यक् प्रादुर्भूतम् "अप्सु" वसतीवरीभिः प्रेरितं‡ "भङ्ग" शत्रूणाम्भञ्जकं¶ "गोभिः" गोविकारैः पयोभिः "परिष्कृतम्" अलङ्कृतम् संस्कृतम्। "इन्द्र" सोमं "देवाः" इन्द्रादयः उपायासिषुः "उपगच्छन्ति॥ १॥२१

§"विचर्षणिः" द्रष्टा॥ "पुनानः" सोमः "विश्वाः" सर्वाः

---

* उ० ३,१,१२,१ = ऋ० ६,८,३०,१ = ज० २,३,१२;— २३,२,११—१२—१३।

† "आङ्गिरसः"-इति ऋषि-नैगेयः।

‡ 'अप्सु भवतीति अप्सुरम्'-इति वि०।

¶ 'भङ्ग' भज्यते ग्रावभिः'-इति वि०।

§ नेह सायणीयर्षिसंवादो दृश्यते, तदिह च मूलं लेखकप्रमादमित्यनुमीयते, "बृहस्पतिः आङ्गिरसः"-इति तु ऋषि नै०।

॥ "विचर्षणिः"-इति पश्यतिकर्मसु षष्ठं नैघण्टुकम् (३,११)। 'विचर्षणिः विविधं पश्यन्ति सर्वं वा पश्यन्ति'-इति वि०।

अथ तृतीया ।

२　२ ३ १ २　३ २उ　३　१ २ ३　१र　२र
आविशन्कलशꣳसुतोविश्वाअर्षन्नभिश्रियः* ।
३ १ २
इन्दुरिन्द्रायधीयते† ॥ ३ ॥ २३‡

५र　र　५　१
( और्शने द्वे ॥) आविशन्कालाईशꣳसुताः । वाइ-
२र १ २　१　२　५　२　१ २　२
श्वाअर्षन् । अभाइश्रायाइः । ओइहाइ । ओवा । ओ
३ १　१　१　३　५र र　२र
२३४हाइ । इन्दुर३ः । आ२इन्द्रा२३४औहोवा । यधी
३ १ १ १ १
यते२३४५ ॥ २४ ॥

"मृधः"¶ शत्रुसेनाः "अभ्यक्रमीत्" अभिक्रामति § । "विप्रं" मेधाविनं तं ‖ सोमं "धीतिभिः"** अङ्गुलिभिर्वा "शुम्भन्ति"†† अलं कुर्वन्ति ॥ २ ॥ २२

---

* "स्पृहः,"-इति,　　† "शूरोनगोषुतिष्ठति"-इति च ऋ ।

‡ ऋ० ७, १, १७, ४ ।

¶ "मृधः"-इति सङ्ग्राम-नामसु विंशं नैघण्टुकम् । 'मृधः—सङ्ग्रामान् जेतुम्'-इति च वि० ।

§ सार्वकालिकोलुङ् (३, ४, ६) ।

‖ "विप्रः"-इति मेधाविनामसु प्रथमं नैघण्टुकम् (३, १५) ।

** "धीतयः"-इति अङ्गुलिनामसु सप्तमं नैघण्टुकम् (२, ५) । 'धीतिभिः-कर्मभिर्बुद्धिभिर्वा'-इति वि० । वस्तुतोधीतिशब्दो बह्वर्थः ।

†† 'शुम्भ शोभायाम् (भ्वा०प०)'-इत्यस्य रूपम् । 'शुम्भन्ति शोभन्ते अलङ्कुर्वन्ति'-इति च वि० ।

अथ चतुर्थी।

१२३ २ ३ १ २ ३ १ २ ३क २र ३ २
असर्जिरथ्योयथा*पवित्रे चम्बोःसुतः।

१२ ३ १ २
कार्ष्मन्वाजीन्यक्रमीत् ॥ ४ ॥ २४†

४र ३ ४ ५ ३ २ ४ ५ १ २
आविशन्कलशम्। सुता३ः। वाइश्वाः। अर्षन्।

१ २ ३र र ५ १ २र
अभाइआया। औहोहोर३४वा। औहोहो१इ। इ-

२ १र ३ ५र र ३
न्दूरा१इन्द्रा२। य। धीया२ताऱ३४औहोवा। ऊ-

५
२३४पा ॥ २५ ॥ २३

‡"सुतः" अभिषुतः "सोमः" "कलशं" द्रोणम् "आ विशन्" "विश्वाः" सर्वाः "श्रियः" सम्पदः "अभ्यर्षन्"¶ अभितो गमयन् "इन्दुः" दीप्तः सोमः§ "इन्द्राय" इन्द्रार्थं "धीयते" दशापवित्रे अध्वर्युभिर्निधीयते ‖ ॥ ३ ॥ २३

---

* "यथा"-इति ऋ०।

† ऋ० ६, ८, २९, १।

‡ इहापि सायणीयर्षिसंवादोनास्ति। 'असितः काश्यपः'-इति ऋषि-नैगेयः।

¶ "अर्षति"-इति गतिकर्मसु पठ्यते, तस्यैव रूपमिदम् ( नै० २, १४ )।

§ योगार्थो दीप्तः स इह विशेषणम्, रूढार्थः सोमः स एव विशेष्यं पदम्।

‖ "अभिस्पृहः"-इत्येव विवरण-सम्मतः पाठ, अतएवोक्तम्,—'अर्षन् चरति, अभिस्पृहः स्पृहणीयाः'-इति ॥

अथ पञ्चमी।

२उ　३ १　२१　२　२　३ २ ३　१ २

प्रयद्गावो*नभूर्णयस्त्वेषाअयासोअक्रमु:† ।

१ २　२ २उ　३ २ २

घ्नन्तःकृष्णामपत्वचम्॥ ५ ॥ २५ †

५　२　१२　२

(सोमसाम ॥) असर्जिरा। थि। योयार२३था। प-

१ २र　१　७　३　५　२र १　२　१

वित्रे। चा। मुवोरःस्रर२३४ता:। कार्ष्म न्वार२३जी। नि-

२ १　४ ५　४

यक्रमाइत्। औ२३होवा। होप्पइ। डा॥ २६ ॥ २४

प्रभूवसुर्ऋषिः‡। "रथ्योयथा" रथसम्बन्धी अश्व इव स यथा विसृज्यते यज्ञे तद्वत् "चम्वोः" अधिषवण-फलकयोः "सुतः" अभिषुतः सोमः "असर्जि" "पवित्रे" सृष्टोऽभूत्। तथाभूतो "वाजी" वेगवान्¶ सोमः "कार्ष्मन्"§ कार्ष्मणि युद्धे इतरेतराकर्षणात्। अत्र देवानामाकर्षणवति यज्ञाख्येसङ्ग्रामे "न्यक्रमीत्" नितरां क्रामति ॥ ४ ॥ २४

---

* "प्रसेगावी" इति ऋ०।

† उ० २, १, २, १ = ऋ० ६, ८, ३१, १।

‡ "आङ्गिरसः"-इति ऋषि-नैगेयः।

¶ 'वाजी अन्नवान्'-इति वि०।

§ "कार्ष्मन्"-इति सुब्लुकि रूपम् (७, १, ३९)। युद्धार्थे प्रवृत्तिनिमित्तं माह—'इतरेतराकर्षणादिति। यज्ञवाचित्वेऽपि तदेव प्रवृत्ति निमित्तमिति दर्शयन् इष्टाञ्जविधिं सङ्गमयति अत्रे त्यादिना।

४ ५ २र र १ २
(काष्वौं द्व ॥) प्रयद्वाउ। गावोनाइभूर्णा१या२३४ः।
२र २ १ ऽर र १ २
त्वे षाइः। आया२सोअक्रमुः। घ्नन्ताःका२३ष्णा॑म्। अ
१ २ र १ ३ ५र र २ ५
पात्वचम्। औहोर्२हा२३४औहोवा। ऊ२२३४पा ॥ २७ ॥
२ १ २ ४र ५र १ र २ र १ ०
प्रयद्गाइवेनभूर्णयाः। त्वाइषाअया। सोअक्रमूर२३ः।
१ र ५ १ ३ ५र र १ २ १ ३ १ १ १
घ्ना२३४न्तोहाइ। का२ष्णा२३४औहोवा। अपत्वचा२३४
५म्॥ २८॥ २५

मेध्यातिथिर्ऋषिः*। "यत्" ये "भूर्णयः†" चिप्राः "त्वेषाः" दीप्ताः‡ "अयासः" अयाः गमनकुशलाः "कृष्णां"¶ "त्वम्" "अप घ्नन्तः" अभिषवेण निरस्यन्तः [त्वचिः सम्वरणकर्मा§ (तु०प०)। इन्दुभूताः सोमाः "प्राक्रमुः" यज्ञं प्रवर्त्तयन्ति। तत्र दृष्टान्तः—"गावोन" उदकानीव‖ तानि यथा चिप्रमधः पतन्ति तद्वत्। गावएव वा उपमीयते तायथा स्वगोष्ठमाशु

---

* "काण्वः"-इति ऋषि० नै०।

† 'भूर्णयः भरणशीलाः'-इति वि०। भूर्णयः-भ्रमणशीलाः, भरणशीलाश्चान्यत्र (प्र० ६१० पृ० द्र०);

‡ 'त्विषदीप्तौ (भ्वा० उभ०)'-इत्यस्य रूपम्। 'दीप्ता-महान्तः'-इति वि०।

¶ कृष्णां रात्रिं कृष्णारूपाम्, अपलचं अपर्णां रात्रे; कृष्णांश'-इति वि०।

§ सम्वरणमाच्छादनम्।

‖ गोशब्दो बदर्थः परमुदकार्थो न नैघण्टुकः।

अथ षष्ठी।

३ १ २ ३ १ २ २ १ २ ३ २
अपघ्नन्पवसेमृधःक्रतुवित्सोममत्सरः।
३ १र २र ३ १ २
नुदस्वादेवयुंजनम्॥ ॥ २६ *

५ ४र ५ १ २
(वैश्वदेवम्॥) अपघ्नौ। होइपावा। सा३मा१र्द्धो
१ २ र १ २ १ १
२ः। क्रातुवित्सो। ममात्सा१रा२ः। नुदा२३। स्वा-
३ ५र र २ १ १११
२दा२३४औहोवा। वयुंजना२३४५म्॥ २९ ॥ २६

गच्छन्ति† तद्वत्। अथवा गावः स्तुतिवाचः‡; ता यथा स्तुत्यं प्रति क्षिप्रं प्राप्नुवन्ति, तद्वत् यज्ञं प्रवर्त्तयन्ति¶ तान् स्तुवे—इति शेषः॥

"यत्"-"ये" इति साम्नऋचः पाठौ॥५॥ २५

अस्याः परस्याश्च निध्रुविर्ऋषिः§। हे "सोमः!" "मत्सरः" मदकरः॥ यः त्वं "मृधः" हिंसकान् शत्रून्** "अप घ्नन्" मारयन्

---

* उ० ५, १, १५. २ = ऋ० ७, १, ३४, ४ = अष्टे ४, २, १७ — १८ — १९ — २० ;—१७, १, १ ;—अष्टा १, २, २।

† अश्वण्यो गाव उषसां वाहनभूताः (१, १५ नै०)।

‡ निघण्टु-प्रथमैकादशं द्रष्टव्यम्।

¶ 'गावः रश्मयः'-इति वि०। 'गावः'-इति रश्मिनामसु तृतीयं नैघण्टुकम् (१,५)।

§ "काश्यपः"-इति ऋषि-नैगेयः।

|| 'मदनीयोभक्षणीयश्च'-इति वि०।

** 'मृधः सङ्ग्रामान् पापानश्च'-इति वि०।

अथ सप्तमी।

१ २ २ १ २ १ २ ३ २ ३ १ २

अयापवस्वधारयायया सूर्यमरोचयः।

३ १२ २२ ३ २

हिन्वानोमानुषीरपः॥ ७॥ २७*

५२ २ २ २

(वैश्वदेवं सूर्य्यसाम॥) एअयापवा। स्वधा २। र

२ २ ५ १ २ २ १ २

या३१उवा२३। ऊ३४पा। ययासूर्यमरो २। चया३१

२ ५ १ २ २ २ १

आवार३। ऊ३४पा। हिन्वानोमानुषा२२इहोइ। आ-

२ २ ५

पआ३१उवा२३। ऊ२२३४पा॥ ३०॥ २७

"क्रतुवित्" अस्मभ्यं प्रज्ञां प्रयच्छन्† "पवसे" चरसि स त्वं "अदेवयुं" अदेवकामं जनं‡ राक्षसवर्गं "नुदस्व" प्रेरय॥६॥ २६

हे सोम! "मानुषीः" मनुष्याणां हितानि¶ "अपः" उदकानि "हिन्वानः" प्रेरयन्§ त्वं "यया" धारया "सूर्य्यम्"

* उ० ५, १. ८, १=ऋ० ७, ३१, २।

† 'क्रतुवित् कर्मवित्'-इति वि०।

‡ यो देवान् यष्टुं न कामयते इत्यर्थः।

¶ 'मनुष्याणां भवाः'-इति वि०।

§ हिन्वान इति 'हिवि प्रीणने (स्वा० प०)'-इत्यस्य रूपम्। 'हिन्वानः सेवमान -इति वि०।

अथाष्टमी ।

१ २ ३ २उ ३ १ २ ३ २ ३ १ १
सपवस्वय आविशेन्द्रं वृत्राय हन्तवे ।
१ १ २ १ २ ३ २
वव्रिवाꣳस*मह्रीरपः ॥ ८ ॥ २८†

२ २ १ ३ ५ १
( वार्त्रघ्नम् ॥ ) सहो३४३इ । पवस्व । यआ२
१ २१ २ १ २ ३ ५ १ २ ४ ५
विशा । इन्द्रं वृत्रा३ । याहन्ता२३४वे । ओवा३ओवा ।
२ १ २ १ २र १ २ ४ ५ ४
वव्रिवा२३ꣳसाम् । माह्रीरपा । औ३होवा । होऽ५इ ।
डा ॥ २१ ॥ २८

"रोचयः" प्रकाशय: । तथा "अया" अनया धारया "पवस्व" चर ॥ ७ ॥ २७

अमहीयुर्ऋषिः‡ । हे सोम ! यस्त्वं "मह्रीः" महतीः "अपः" महान्त्युदकानि "वव्रिवांसं" निरुन्धानं¶ "वृत्राय" वृत्रं§ "हन्तवे"‖ हन्तुं "इन्द्रम्" "आविश" अरच्छ** 'स' त्वं "पवस्व" धारया चर । सोमं पीत्वा मत्तः सन्निन्द्रो महान्त्युदकानिरुन्धानं वृत्रं जघानेत्यर्थः ॥ ८ ॥ २८

---

* "वव्रिवांसं"-इति सर्वव्याख्यात-सम्मः पाठोगानग्रन्थसम्मतश्च ।

† ऋ० ७, १, ११, २ ।

‡ "आङ्गिरसः"-इति ऋषि-नैगेयः ।

¶ 'वव्रिवांसं चरणस्वभावम्'-इति वि० ।

§ 'वृत्राय मेघाय' इति वि० ।

‖ "तुमर्थे सेसेन् ( ३, ४, ९ )"-इत्यादिना सिद्धम् ।

** 'आविश अवेक्षर्पणार्थस्य, तर्पयसि'-इति वि० ।

अथ नवमी।

३ २ ३ १२ २२ ३ १ २ ३ २ ३ २
अयावीतीपरिस्रवयस्तइन्दोमदेष्वा।
३ १ २ ३१ २२
अवाहन्नवतीर्नव ॥ ९ ॥ २९*

५ २ २ २२ १
( सोमसामानि त्रीणि ॥ ) अयावीती। पारिस्रवा।
१ १ २२ १ १ २ २ २१
यस्तइन्दाउ। मादाइषुवा। अवाहाऽन्नाइ। वतो२३
५ ४ ५
४वा। नापुवोहाइ॥ २२ ॥

२ १२ २ २ २२ १ २ २२ २ २२ २
अयावीता। औहोवा। औहोऽ४इ। औ। होर।
२ ५२ २ १ २ १ २ ३२ १
वा२३४। औहोवा। परिस्रव। यस्तइन्दा। औहो
२ ३२ २२ १ २ ५२ २
वा। औहोऽ४इ। औ। होर। वा२३४। औहोवा।
१ ३२ १२ २ २ ३२ १ २ ३२ २
मदे२षुवा। अवाहन्ना। औहोवा। औहोऽ४इ।
२२ १ ३ ५२ २ २ १२ १ १ १ १
औ। होर। वा२३४। औहोवा। वतीर्नवा२३४५॥ २३॥

४ ३ २ ४ २ ४ ५ १ २ २ १
अयाऽ५वी। ताइपाऽरिस्रवा। यास्तइन्दो। मदा

* उ० ५. १, ६, १ = ऋ० ९, ७, १९, १।

अथ दशमी ।

१ २ ३ १२ २२ ३१उ ३१ २ ३ १ २
परिद्युक्षꣳसनद्रयिम्भरद्वाजंनोअन्धसा ।

२ १ २ १ ३२३१ २ ४ ५
इषूश्वा२ । अवाहाइन्ना । वतीर्नवा । औ३होवा ।

४
होपुइ । डा ॥ २४ ॥ २९

असहीयुर्ऋषिः* । हे "इन्द्र" सोम ! "अया" अनेन रसेन "वीती"† वीत्यै इन्द्रस्य भक्षणाय‡ "परिस्रव" परिक्षर । कीदृशेन रसेनेत्यत आह "ते" तव "यः" रसः "मदेषु" सङ्ग्रामेषु¶ "नवतीर्नव" नवनवति-सङ्ख्याकाः§ शम्बरपुरीः‖ "अवाहन्" जघान (अमुं सोमरसं पीत्वा मत्तः सन्निन्द्रः उक्तसङ्ख्याकान् शम्बरपुरीर्जघानेति मत्वा रसो जघानेत्युपचारः ॥ ८ ॥ २९

---

* "आङ्गिरसः"-इति ऋषि-र्नैगेयः ।

† पा० ३, ३, ९६ । ७, १, ३९ ।

‡ "वीतिः कान्तिः, मार्गो वा तेन परि स्रव परिसमन्तात् स्रव'-इति वि० । इह नये कान्तिकर्मणोवेतेरिदं ( नै० २, ६, ३ ) रूपमिष्टम् ।

¶ 'मदेषु पुरतोव्यवस्थितेषु'-इति वि० ।

§ अष्टौशतानि दशोत्तराणि ।

‖ शम्बरइति निघण्टौ मेघनामसु ( १, १० )—उदकनामसु ( १, १२ ) बलनामसु ( २, ९ ) च दृश्यते । ऐतिहासिकस्तु शम्बरनाम दैत्यविशेषः, तद्वधोपाख्यानं भागवतादौ ( १०, ५५ ) द्रष्टव्यम् ।

३ १ २ ३२ ३२
स्वानोअर्षपवित्रआ ॥ १० ॥ ३० *

॥ इति प्रथम-दशति ॥

(भारद्वाजम्॥) परिद्युक्षाम्। ओइ। सनद्रायी २म्। भरद्वाजा२म्। ओइ। नोअन्धासा२३४। स्वा नो३४अर्षा३। पवीवा। आ५यीं३हाइ॥ ३५ ॥ ३०

॥ इति ग्रामे गेये त्रयोदशः-प्रपाठकः ॥

उचथ्यऋषिः† । "द्युक्ष" दीप्तं‡ "सनत्" दीयमानं¶ सैन्य वा "रयिम्" धनं यस्य तादृशं "वाजं" बलं "अन्धसा"§ अन्नेन सह सोमः "नः" अस्माकं‖ "परिभरत्" परतोहरतु प्रयच्छत्वित्यर्थः। अथ प्रत्यक्षस्तुतिः—हे सोम! "स्वानः" सुवानोऽभिषूयमाणस्त्वम् "पवित्रे" "आर्ष" आभिमुख्येन-क्षर।

"द्युक्षं सनद्रयिं"-"द्युक्षःसनद्रयि"-इति, "स्वानः"-"सुवानः"-इति च साम्नऋचः पाठौ ॥१० ॥ ३०

इति श्रीसायणाचार्य्य-विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

* ऋ० ७, १, ६, १।

† "आङ्गिरसः"-इति ऋषि नै०।

‡ "द्युतौ त्रियन्त इति द्युक्षम्"-इति वि०।

¶ 'सनत् चिरन्तनम्'-इति वि०।

§ 'अन्धसा तर्पितः'-इति वि०।

‖ "नः अस्मान् प्रति'-इति वि०।

अथ चतुर्थे खण्डे—

सैषा प्रथमा ।

१ २ ३ २ ३ १ २ ३ २ ३ १र २र ३ २
अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः ।
१र २र
सꣳ सूर्येण दिद्युते ॥ १ ॥ ३१

२ १ ४
ओम् ॥ (वार्षाहरम् ॥) अचिक्रदा३त् । अचिक्रदा
२ र १ र र ४ र
५दे । वृषाहरा३इ । वार्षाहरा३इ । वृषाहरा५ए ।
२ र १ र २ ४ र २
महान्मित्रा३ः । माहान्मित्रा५ए । महान्मित्रा५ए । नद-
१ २ ४ २ र
र्शता३ः । नादर्शता३ः । नदर्शता५ए । सꣳहरिया३इ ।
१ र ४ र २ १
साꣳसूरिया३इ । सꣳसूरिया५ए । णादिद्युता३इ । णादि
२ ४
द्युता३इ । णदा५इद्युताउ । वा ॥ १ ॥ ३१

मेध्यातिथिर्ऋषिः† । "वृषा" कामानां वर्षकः "हरिः" हरितवर्णः "महान्" पूज्यः "मित्रोन" यथा सखा तद्वत् । "दर्शतः" दर्शनीयोयः सोमः "अचिक्रदत्" शब्दङ्करोति सोयं सोमः "सूर्य्येण" सह "दिद्युते" दिवि प्रकाशते ॥ [ "दिद्युते"-"रोचते" -इति साम्नऋचः पाठौ ॥ १ ॥ ३१

---

* उ० ४, १, ३, ९ = ऋ० ६, ७, १९, १ ।

† "काण्वः"-इति ऋषि-नै० ।

अथ द्वितीया।

२ ३ १ २ ३ २ ३१ २ ३ १ २
आ ते दक्षम्मयोभुवं वह्निमद्या वृणीमहे।

३ १ २ ३ १ २
पान्तमा पुरुस्पृहम्॥ २॥ ३२*

५र र २ १ २ २
(वार्षानि त्रीणि॥) आतेदक्षाम्। मयोभूवाम्।

१ २ १ ७ ३ ५ १ २ ५ २
वह्निम। द्या। वृणोरमा२३४ हाइ। पान्तमा३। ई३या।

१ १ ३ ५र र २ ५
पुरू२३। स्पृरहा२३४ औहोवा। ऊ३२३४पा॥ २॥

२ ३ ५ २ ३ ५ २ ४
आतेदा२३४क्षाम्। मायोभू२३४वाम्। वह्नि-

३र ४ ५र ३ ५ १ २ २ ५ २
मद्यावृणो। महोर३४ हाइ। पान्ता३मा३। ई३या३।

१ ३ ५र र ३ ५
पू२रू२३४ औहोवा। स्प२३४हाम्॥ ३॥

३र ४र ३ ४ ५ ३ ५ ३ ४ ३र ४ ५ र
आतेदक्षम्मयः। भुवो२३४हाइ। वह्निमद्यावृणो।

३ ५ १ २ १ २ १
महो२४४हाइ। पान्ता१मा२। पूरुस्पृहम्। इडा२३

२ १
भा३४३। ओ२३४५इ। डा॥ ४॥ ३२

---

* उ० ४, २, २, १०—ऋ० ७, २, ७, ३।

अथ तृतीया ।

१ २ ३ १ २ ३ १र २र ३ २ ३ १ २
अध्वर्यो अद्रिभिःसुतꣳसोमम्पवित्र आनय

३ १ २ ३ १ २
पुनाहीन्द्रायपातवे ॥ ३ ॥ ३३*

२ १ ५ २ १ २ २
( वैरूपे द्वे ॥ ) अध्वर्यो२३४आ । द्रिभाइः ऊ३ता

१र ३ ५ १ २ १
३म् । सोमाऽम्पा२३४वो । त्राआ१नाया२ । पुना-

र २ ५र र २र १२ २ ११११
२३ । हीन्द्रा३४औहोवा । यपातवे२३४५ ॥ ५ ॥

४ ५ र घ ५ २ १ ६ २ २
अध्वर्यौ । होअद्री । भिःसुतम् । औ३हो३वा३ ।

भृगुर्ऋषिः† । हे सोम ! यष्टारोवयं "तं" तव स्वभूतं "दक्षं" बलम् "अद्य" अस्मिन्यागदिने "आ" आभिमुख्येन "वृणीमहे" सम्भजामहे । कीदृशम् ? "मयोभुवं" सुखस्य भावयितारं "वह्निं" धनादीनां प्रापकम्‡ "पान्तं" शत्रुभ्योरक्षकम् । "पुरुस्पृहं" बहुभिः स्पृहणीयं काम्यमानम्बलमिति ॥ २ ॥ ३२

---

* उ० ५, १, ११, १ = ऋ० ७, १, ८, १ = जहे ४, १, २० ;—४, २, १—२—३—४—५—६ ;—१६, २, १३—१४ ।

† 'वारुणिः—भार्गवो वा जमदग्निः'—इति ऋषि-नै० ।

‡ 'वहेयागिकार्थस्वेदेष्टः ( भा० उ० )।

अथ चतुर्थी ।

२ ३ २ ३ १ २ ३ १ २ ३ १र २र
तरत्समन्दीधावतिधारासुतस्यान्धसः।
३ २ ३ १ २
तरत्समन्दीधावति ॥ ४ ॥ ३४*

१र ३ ५ १ २ १ १
सोमार्म्या२३४वी। ओवाआ१नाया२। पुना२३। ह्वा२३
३ ५र र २ १र २ ३ १ १ १ १
न्द्रा२३४औह्वोवा। यपातवे२३४५ ॥ ६ ॥ ३३

५ २र १ २ १र
(तरन्तः ॥) तरत्समा। दीधावा१ता२३इ। धारा-
३ ५ २ १ १ ३ ५र र १
२सू२३४ता। स्यआ२३१धा२सा२३४औह्वोवा। तरत्सम
र २र ३ २ १ १ १
न्दीधावती२३४५ ॥ ७ ॥ ३४

उचथ्यऋषिः†। हे "अध्वर्यो!" "अद्रिभिः" ग्रावभिः "सुतम्" अभिषुतं सोमं "पवित्रे" "आनय" प्रापय। एतदेव दर्शयति—"इन्द्राय" इन्द्रस्य "पातवे" पानाय "पुनाहि" पुनीहि पावय‡ ॥

"पुनाहि"-"पुनीहि"-इति, "आनय"-"आसृजे"-इति च साम्नऋचः पाठः ॥ ३ ॥ ३३

* उ० ४, १. ५, १ = ऋ० ७, १, १५, १—आर० १, २, २४।

† "आङ्गिरसः"-इति ऋषि-मै०।

‡ 'पूतं कुरु'-इति स्पष्टं विवरणे।

अवत्सारऋषिः*। "मन्दी" देवानां हर्षकः स सोमः "तरत्" स्तोतॄन् पाप्मनः सकाशात् तारयन् "धावति" द्रोणकलशङ्गच्छति†। धावतीति पुनरपि तदेवाहान्वयन्त्वादरार्थं तरत्समन्दीधावतीति। यद्वा। अस्यऋचोयास्केनोक्तार्थो द्रष्टव्यः। तद्यथा—"तरति स पापं सर्वं मन्दी यः स्तौति धावति गच्छत्यूर्ध्वां गतिम्धारा सुतस्यान्धसोधारयाभिषुतस्य मन्त्रपूतस्य वाचा स्तुतस्येति (नि० प० १३, ६)" ॥ ४ ॥३४

---

* "काश्यपः"-इति ऋषि-नैगेयः।

† अत्रेदं विवरणम्—"तरत्स। विनियोगोऽस्य षष्ठेऽहनि। चतुर्ऋचोभवति प्रतिष्ठायै। प्रतिष्ठायै यजमानाय ध्वस्रौ वै पुरुषन्तौ तरन्तध्वस्रावध्वेच्य स्त्रियः पुरुषन्त्यो बहु सम्भजन्त्यो बहु पुरुषन्तरन्त-पुरुमीळ्हाभ्यामृषीभ्यां वैददश्विभ्यां सहस्राणि अदित्सताम् दातुमिच्छन्ताम् तौ पुरुमीळ्हे ईक्षेता मनसा ग्राह्यमग्राह्यमिति। कथं केन प्रकारेण नौ आवामिदम्। आत्तम् अप्रतीगृहीतं स्यादिति। तौ प्रत्येतां चतुर्ऋचमप्रत्यर्थं ध्वस्रयोः। पुरुषन्त्योरमन्त्योः आददाते सहस्राणि आत्तवन्तौ तरत् तरन् प्रतिग्रहदोषतः मन्दी सोमः धावति शोधयति। तावेवैतत्तयो आत्तं गृहीतम् अप्रतिगृहीतं भवति अन्यत्रापि आत्तं अस्य अप्रतिगृहीतं भवति गृहीतमपि यः। एवं विजानाति विनाशं सो भवति। तरन्त-पुरुमीळ्हौ उभयस्याचाद्यस्यावरुध्यौ। मनुष्यस्य च दैवस्य च अवरोधनार्थं तथाच गौतमः—'अप्रतिग्राह्यं प्रतिजिघृक्षन् प्रतिगृह्य वा चतुर्ऋचं तरत्समन्दीत्यप्सु जपेत्॥ तरत सः मन्दी सोमः धावति शोधेति। गच्छति वा शोधयति वा शोधयति वा पाप। न केवलं सोमः धारा अपि सुतस्य अन्धसः अन्नस्य सोमलक्षणस्यातरत्। तरति स पापं यस्य मन्दी धावति शोधयति उक्ता मध्यमिका वाक् धारा वा वेद विजानाति। वसूनां मर्त्यस्य देवो अवसः एवंगुणविशिष्टा धारा। ध्वस्रयोरिति व्याख्याता। आददयोः पुरुषन्त्योः तुग्रतं तुग्रच्छतानि धनानां सहस्राणि च आददाते—तरत्समन्दीभवति ॥"-इति।

अथ पञ्चमी।

१ २ ३ १ २ ३ १ २ ३ १ २
आपवस्वसहस्रिणꣳरयिꣳसोमसुवीर्य्यम्।
३ १र १र
अस्मेश्रवाꣳसिधारय॥ ५॥ ३५ *

५र १
(सोमसाम॥) आपवस्व।। सहस्रिणम्। ऊवाइ।
१ २ १र २ र १
ऊवा२३हो। रयिꣳसोमा। सुवीरियाम्। ऊवाइ।
१ २ र १ २ र १
ऊवा२३होइ। अस्मेश्रवा। सिधारया। ऊवाइ। ऊवा
१ २ ५र र ३ ५
२३होर। वा२३४औहोवा। ऊ२३४पा॥ ८॥ ३५

निध्रुविर्ऋषिः†। हे "सोम!" त्वं "सहस्रिणं" बहु-सङ्ख्याकं "सुवीर्यं" शोभन-सामर्थ्योपेतं "रयिं" धनं "आ पवस्व" आभिमुख्येन चर। अपिच "अस्मे"‡ अस्मासु "श्रवांसि" अन्नानि "धारय" स्थापय॥ ५॥ ३५

---

* ऋ० ७, १, ३०, १।

† "काश्यपः"-इति ऋषि-नै०।

‡ अस्मे इति, अस्मदः सप्तविभक्तिकमेव रूपं भवति। तत्र सुपामित्यादि (७, १ ३९) शेश्छन्दसीति च (६, १, ७०) सूत्रं स्मर्त्तव्यम्। तत्प्रथैव श्रूयते बह्वृचि। तद्यथा—"अस्मे ते बन्धुः (१, २, १५, ७)"-इत्यत्र वयमित्यर्थः। "अस्मे यातं नासत्याः सजोषाः (३, ३, १, १९)"-इत्यत्र अस्मानित्यर्थः। "अस्मे समानेभिर्वृषभ पौंस्येभिः (३, २, ७, १०)"-इत्यत्र अस्माभिरित्यर्थः। "अस्मे प्रयन्धिमघवन्नृजीषिन्

अथ षष्ठी।

१ २ ३ १ २ ३ १ २ ३ १ र २ र

अनुप्रत्नास आयवः पदं नवीयो अक्रमुः।

३ १ २ ३ १ २

रुचे जनन्त सूर्य्यम्॥ ६॥ ३६ *

५ र र ५ २ १

(सूर्य्यसाम॥) अनुप्रत्नास आयाईवाः। पदन्न

र र ७ २ १ १ २

वीयो अक्रमूः। रुचाइजना। ताउसू। ऊर्म्मायेइ।

५

री२३४याम्॥ ८॥ ३६

†"प्रत्नासः" पुराणाः केचिद् "आयवः" गमनवन्तोऽश्वाः "नवीयः" नवतरं "पदं" "अन्वक्रमुः" अनुक्रमन्ते (रूपकव्यवहारेण सोमाः स्तूयन्ते) "रुचे" दीप्त्यै तदर्थं "सूर्य्यं" "जनन्त" जनयन्ति‡॥ ६॥ ३६

---

(१, ४, ४, १९)"-इत्यत्र अस्मभ्यमित्यर्थः। "अस्मे आराचिद् द्वेषः सनुतर्युयोतु (६, ६, १०, २)"-इत्यत्र अस्मदित्यर्थः। "ऊर्वं इव पप्रथे कामो अस्मे (७, ३, १, १०)"-इत्यत्र अस्माकमित्यर्थः। "अस्मे धत्त वसवो वसूनि (७, ४, ८, ५)"-इत्यत्र अस्मास्वित्यर्थस्येति॥

* ऋ० ६, ८, १३, २।

† ऋषिः स एव।

‡ अत्रेदं विवरणम्—"अनुप्रत्नासः पुरातनाः आयवः मनुष्याः वसिष्ठादयः पदं पद्यते उत्पाद्यते संसाराख्यं नवीयो नवतरं अस्मिन् कल्पे अक्रमुः क्रमितवन्तः भवेद्दीप्त्यर्थं जनन्त जनयन्त ? र्य्यम्।" इति॥

अथ सप्तमी।

१ २ ३ १ २ ३ १र २र ३ १ २

अर्षासोमद्युमत्तमोभिद्रोणानिरोरुवत्।

३ २ ३ २ ३ २

सीदन्योनौवनेष्वा॥ ७॥ ३७*

२ १ १र

(दाढेच्युतानि त्रीणि॥) अर्षा। इ्हा। सोम

१ २ १ र र

द्युमा२त्तमा। इ्हा। अभाइ। इ्हा। द्रोणानिरो२

१ २र १ र र १

रुवा। इ्हा। सीदा। इ्हा। योनौवना२इषुवा।

२

इ्हा१॥ १०॥

४ ५ १र र २ १

अर्षाहाउ। सोमद्युमत्तमो। भिद्रो२३णा। निरा

२ १ १ र २ १र २ २

औ३हो। रुवा२३त्। सीदाउवा। योनौवा३ने।

१ २ ५

ऊम्माये३। षू२३४वा॥ ११॥

३ ४र ५र ३ १ ३ ४र ५र १ २

अर्षासोमद्युम। त्तमाः। अर्षासोमा। द्यूमत्तमः।

१ २र १ २ १र २ १ २र १ २

अभिद्रोणा२३हा। निरोरुवत्। साइदन्योना२३ऊहाइ।

१ २ १

वनाइषू३२वा३४३। औ२३४५इ। डा॥ १२॥ ३७

* उ० २, २, ११, १ = ऋ० ७, २, ४, ४ = जद्दे २, १, ३—४;—७, २, १२ = जह्य १, १, ११;— १, २, १३;—२, १, २।

अथाष्टमी ।

१ २　　२ १　२ ३ १ २　३ २ २
वृषासोमद्युमाँ असिवृषादेववृषव्रतः ।
३ १ २
वृषाधर्म्माणिदधिषे ॥ ८ ॥ ३८ *

५ र र　　२　　१
( वृषकम् ॥ ) वृषासोमा । द्युमाँ२ / आसा
१ २ २　　१ २ ३　५　१ २
२इ । वृषादेवा२वा३इ । वार्षव्रा२३४ता: । वृषाधर्मा

भृगुर्ऋषिः† । हे "सोम !" "द्युमत्तमः" अतिशयेन दीप्तिमान् त्वं "द्रोणानि" ( प्रयोगबाहुल्यापेक्षमेतद्बहुवचनम् ) द्रोणकलशानभिलक्षीकृत्य "रोरुवत्" पुनः पुनर्भृशं वा शब्दं कुर्वन् "अर्ष" आगच्छतु दशापवित्रमध्यान्निर्गतः सोमः अविच्छिन्नधारया पतन् शब्दङ्करोति खलु । तत्र दृष्टान्तः—"वनेषु" वननीयेषु‡ यज्ञेषु वनसम्बन्धिषु यज्ञगृहेषु वा¶ "योनौ" स्थाने§ "आसीदन्" यद्वा । वनेषु योनौ भूमौ आसदन् पूर्वं स्थितः सन् यज्ञगृहं अभ्यर्षयति सम्बन्धः ॥

'सीदन्योनौवनेष्वासीदन्"-"श्येनोनयोनिमेतिसाम्नऋचः पाठौ ॥ ७ ॥ ३७

---

* उ० २, १, ३, १ = ऋ० ७, १, २९, १ ।

† "वारुणिः"-इति ऋषि-निर्णयः ।

‡ 'वनु षण् सम्भक्तौ ( भ्वा० प० )'-इत्यस्येदं रूपमिष्टमित्यभिप्रायः ।

¶ 'वनेषु उदकेषु'-इति वि० ।

§ "योनिः"-इति गृहनामसु चतुर्दशं नैघण्टुकम् ( ३, ४ ) ।

अथ नवमी।

३ १ २ २ १ २ ३ १ २ ३ १ २
इषे पवस्व धारया मृज्यमानो मनीषिभिः।
१ २ ३ १र २र
इन्द्रो रुचाभिगा इहि ॥ ८ ॥ ३९ *

ऽ २ १ २र २ १
३। ई३या। णाइदधिषे। इडा२३भा३४३। ओ२३
४५इ। डा ॥ १३ ॥

५ र २ र र र २
(ऐषम ॥) इषेपवा। स्वधारयौहोवा३हा३४।
५र र २ १ ऽर र र १ २ ३ २र ३ ५र २
औहोवा। मृज्यमा२नोमनीषिभिः। इन्द्रोरुचा। अभि
र र २ ५र र १ २ २ १ १ १ १
गौहोवा३हा३४। औहोवा। उप्। इहीर२३४५ ॥ १४ ॥ ३९

कश्यपऋषिः†। से "सोम!" "वृषा" कामानां वर्षकस्त्वं "द्युमान्" दीप्तिमान् "असि"। अपिच हे "देव" द्योतमान सोम! "वृषा" त्वं "वृषव्रतः"‡ वर्षणशीलकर्म्मासि। किञ्च हे सोम! "वृषा" त्वं "धर्म्माणि" देवानां मनुष्याणां च हितानि कर्म्माणि¶ "दध्रिषे"-"दधिषे"-इति पाठौ ॥ ८ ॥ ३८

---

* उ० २. २, ४, १ = ऋ० ७, १, ३८, ३।

† "मारीचः"-इति ऋषि-नै०।

‡ "व्रतम्"-इति कर्मनामसु सप्तमं नैघण्टुकम् (१, १)।

¶ 'धर्माणि धारणानि'-इति वि०।

अथ दशमी ।

३ १ २ ३ १ २ ३ १ २ ३ २
मन्द्रया सोम धारया वृषा पवस्व देवयुः ।
३ १ २ ३ २
अव्यावारेभिरस्मयुः ॥ १० ॥ ४०*

५ र २ १ र २
(श्यावाश्वम् ॥) मन्द्रयासो । मधारया । वृषापा
२ १ २ १ १ २
२३वा । स्वदाइवार३यू: । अव्वार२३: । वार२रा२३४
५ र र २ १ २
औहोवा । भिरस्मयू१: ॥ १५ ॥ ४०

कश्यपऋषिः† । हे "इन्दो" सोम! "मनीषिभिः" ऋत्विग्भिः‡ "मृज्यमानः" शोध्यमानस्त्वं "इषे" अस्माकमन्नाय¶ "धारया" "पवस्व" क्षर "रुचा" रोचमानेनान्धसा§ "गाः" पशून् "अभीहि" अभिगच्छ ॥ ८ ॥ ३८

असितऋषिः‖ । हे "सोम!" "वृषा" कामानां वर्षिता "देवयुः" देवकामः "अस्मयुः" अस्मत्कामश्च त्वं "अव्या" अवेः

* ऋ० ९, ७, २८, १ ।

† "मारीचः" इति ऋषि-नैगेयः ।

‡ "मनीषी"-इति मेधाविनामसु एकादशं नैघण्टुकम (३, १५) । 'मनस एषणशीलैः' इति वि० ।

¶ "इषम्" इति अन्ननामसु चतुर्दशं नैघण्टुकम (२, ७) ।

§ 'रुचा दीप्त्या'-इति वि० ।

‖ "काश्यपो देवलो वा" इति ऋषि नैगेय ।

अथैकादशी।

३ १ २ ५ १ २ ३ २उ ३क २

अयासोमसुकृत्ययामहांत्सन्नभ्यवर्द्धथाः।

२ १र २र

मन्दानइद्वृषायसे ॥ ११ ॥ ४१*

५ ४ ३ ४ ५ २ १र

(अयासोमीयम् ॥) अया३सो३मसुकृत्यया। महां

७ ३ ५ १ २र १ २ २

त्सन्ना। भ्यवार्द्धा२३४थाः। मान्दानआये३त्। वृषा३

४

या५सा६५ईद्॥ १६ ॥ ४१

"वारेभिः" बलैः कृते दशापवित्रे "मन्द्राय" मदकरया धारया "पवस्व" क्षर ॥

"अव्यावारेभिः"-"अव्योवारेषु"-इति पाठौ ॥ १० ॥ ४०

कविः ऋषिः†। हे "सोम!" "अया" अनया "सुकृत्यया" शोभनया अभिषवादि-लक्षणया क्रियया "महान्" पूज्यमानः "सन्" देवान् प्रति "अभ्यवर्द्धथाः" अभ्यवर्द्धयः। "मन्दानः इत्" मोदमानः एव "वृषायसे" वृषवदाचरसि यथा मोदमानो वृषभः शब्दं करोति तथाभिषववेलायां उपरवेषु शब्दं करोषीत्यर्थः ॥

"अभ्यवर्द्धथाः"-"अभ्यवर्द्धत"-इति, "वृषायसे"-"वृषायते"-इति च पाठः ॥ ११ ॥ ४१

---

* ऋ० ७, १, ४, ११

† "भार्गवोऽयम्"-इति ऋषि-नैगेयः, "भारद्वाजः"-इति सनु०।

अथ द्वादशी ।

३ १र २र ३ १र २र ३ १ २
अयं विचर्षणिर्हितः पवमानः स चेतति । ८

३ २र २र ३ २
हिन्वान आप्यं बृहत् ॥ १२ ॥ ४२*

२ ३र ४र ५
(आग्नेयम् ॥) औ । हौहोवाहाइ । अयं विचा ।
१ १ २ ३र ४र ५ र २
षणाइर्हाइताँ । औहौहोवाहाइ । पवमाना: । स
१ २ ३र ४र ५ र २ ६
चाइताताँ । औहौहोवाहाइ । हिन्वानआ । पियौ२
२ ४ ५ ४ ५
हौ२ । हवोवा । बृ५होऽ६हाइ ॥ १७ ॥ ४२

जमदग्निः ऋषिः† । "विचर्षणिः" विद्रष्टा‡ "हितः" पात्रे निहितः "पवमानः" शोध्यमानः "अयं" सोमः "आप्यम्" अप्सु भवं "बृहत्" महत् अन्नं "हिन्वानः" प्रेरयन् "सचेतति"¶ सर्वैः सञ्ज्ञायते ॥ १२ ॥ ४२

---

* ऋ० ७, १, २५, ५ ।

† "भार्गवः"-इति ऋषि-नैगेयः ।

‡ "विचर्षणिः"-इति पश्यति-कर्मसु षष्ठं नैघण्टुकम् (३, ११)। चर्षणि शब्दव्याख्यानावसरे यास्कः "चायिता"-इत्याह (५, २४)। 'विचर्षणिः सर्वं पश्यति'-इति वि० ।

¶ 'सचेतति सम्यगानयति'-इति वि० ।

अथ त्रयोदशी ।

१ २ ३ १र २र ३ १र २र

प्रन*इन्दोमहेतुन†ऊर्म्मिन्नबिभ्रदर्षसि ।

३ २ ३ २ ३ १ २

अभिदेवाऽअयास्यः ॥ १२ ॥ ४२ ‡

३ ४ ५ र र २ ३ ५

( आयास्यम् ॥ ) प्रनइन्दोए । हौऐहौ२३४या ।

२ १र १ ५ १ र १ १

महेतुनए २हौऐ२हौ३या । ऊर्मिन्नबिभ्रदर्षसऐ२हौऐ

५ २ १ २ १ ३ ५र र २ १र

२हौ३या । अभाये३ । दा३इवा२३४औहोवा । अया

२ ३ १ १ १ १

सिया२३४५ः ॥ १८ ॥

३ ४ ५ र २ २ ५

( आयास्यमुत्तरम् ॥ ) प्रनइन्दो । इया३४३इ३४या ।

२ १र ५ २ र १ ५ २

महेतुनइया२ई३या । ऊर्मिन्नबिभ्रदर्षसइया२ई३या ।

१ २ १ ३ ५र र २ २ १र

अभाये३ । दा३इवा२२४औहोवा । ए३ । अया-

२ ३ १ १ १ १

सिया२३४५ः ॥ १९ ॥ ४३

---

* "प्रण"-इति
† "महेतम"-इति च } —क०।

‡ क० ७, १, १, १

अथ चतुर्दशी ।

२   १ २   ३ १ २ ३   ३ २   ३ १ २
अपघ्नन्पवते मृधोऽपसोमो अराव्णः ॥
२   १ २     ३ २
गच्छन्निन्द्रस्य निष्कृतम् ॥ १४ ॥ ४४*

॥ इति द्वितीय-दशति ॥

२र ३     ५       ४   ५
( भारद्वाजम् ॥ ) हो ई २३४ या । २ । इया हाइ ।
२ १     २र १ १ १     २र ३     ५       ४   ५
अपघ्ना२३न्पा३४५ । हो ई २३४ या । २ । इया हाइ ।
२ १       ३     ५२ र     १ र ऽर
वताइ । मा२ । धा२३४ । औ हो वा । अपसोमो२
१ ऽर   १ १ १     २र ३     ५       ४   ५
अरा२व्णा३४५ः । हो ई २३४ या । २ । इया हाइ ।

अयास्यऋषिः† । हे "इन्दो" क्लिद्यमान !‡ त्वं "नः" अस्माकं "महे" महते "तने"¶ धनाय "प्रार्षसि" प्रगच्छति । "न" संप्रत्यर्थे§ अयास्यश्चायमृषिः तव "ऊर्मिं" तरङ्गं "बिभ्रद्" धारयन् देवान् यष्टुमभि गच्छति ॥ १३ ॥ ४३

---

* उ० १, ५, १, ७, १ = ऋ० ७, १, २२, ५ ।

† "आङ्गिरसः"-इति ऋषि-नैगेयः ।

‡ "इन्दुरिन्धेरुनत्तेर्वा"-इति ( ४, ४१ ) यास्कोक्तेः उनत्तेर्योगार्थएवेष्ट [illegible] । उन्दी क्लेदने ( धा० प० ) ।

¶ "तना"-इति धननामसु पठ्यते ( २, १० नि० ) ऋग्वेदीयपाठोऽपि 'तने'-इत्येव ।

§ "अथ निपाता उच्चावचेष्वर्थेषु"-( नि० १, ४ ) इत्याद्युक्तं ।

२ १ २ ११११ १ २ ५ ४ ५
गच्छन्ना२३इन्द्रा२३४५। होइ२३४या। २। इयाहाइ।
२ १ ३ ५२ र ३११११
स्यनाइः। का२। ता२३४। औहोवा। इ२३४५॥२०॥४४

अमहीयुः ऋषिः*। "सोमः" "मृधः" हिंसकान् शत्रून्† "अपघ्नन्" मारयन् "अराव्णः" ग्रक्तौ सत्यान् धनानामदातॄं श्च‡ अपघ्नन् "इन्द्रस्य" "निष्कृतं"¶ स्थानं "गच्छन्" प्राप्नुवन् "पवते" धारया चरति॥ १४ ॥ ४४

इति श्रीसायणाचार्य्य-विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य चतुर्थः खण्डः ॥४॥

---

अथ पञ्चमे खण्डे—

सैषा प्रथमा।

३ १ २ ३१ १ ३ १र २र
पुनानःसोमधारयापोवसानोअर्षसि।
१ २ ३१र २र ३ १ २ ३ २ ३ १ ३ १ २३१ २
आरन्नधायोनिमृतस्यसीदस्युत्सोदेवोहिरण्ययः॥१॥ ४५§

---

* "आङ्गिरसः"-इति ऋषि-निर्णयः।

† 'मृधः सङ्ग्रामान् पाप्मनो वा'-इति वि०।

‡ 'अराव्णः अन्नताभिः प्रस्तारः'-इति वि०।

¶ 'निष्कृतं संस्कृतम्'-इति वि०, परिष्कृतमित्यर्थः।

§ ऊ० १, १, ९, १= ऋ० ७, ५, १९, ४= आर० १, १, १०= ऊह्य १, १, १—३;—१, २, १०;—१, १, १;—४, १, १—५—९;—६, १, २—१२—१३;—६, १, २—१३;—१०, १, १२—१३—२०;—११, २, १९;—१३, १, ७—१९;—१३, १, १५;—१५, २, ३—४; १७, १, १०—११—१६;—१८, १, ७—२०—२१;—१९, १, २०;—२०, २, ११—१५—१६—१७;—२२, २, ८= ऊह्य १, २, १०;—३, १, ९—२०,—४, १, ५;—४, २, ४—१५,—५, १, १४;—५, २, ८;—६, १, ७।

५ र　१ २　५र र
(आयास्यम् ॥) पुनानःसो । मा२धा२३४औहोवा ।
३ ५　१ १र ५र र　१र २ २
रा२३४या । अपोवसानोअर्षसि । आरत्नाइधाः ।
१र २ २　१ ३　५र र　३ ५
योनाइमा२र्त्ता३ । स्या२सा२३४औहोवा । दा२३४सी ।
१ २ ३　१ ३　५र र　३
उत्सो दि ३ वो३ । हा२इरा २ ३ ४ औहोवा । ण्या-
५
२ ३ ४ याः । ॥ २१ ॥

१ ५ २　१ र　३ २
(माण्डवम् ॥) इया२ई३या । पुनानःसो२ । मधा
३ ५　१ १र र २र १　२　१र र र
रा२३४या । अपोवसानो अर्षा२३सी । आरत्नधायोनि
२ १र　२　३ र २र १　१ ३ ५र
मृतस्यसीदा२३सा । उत्सो दिवो२३ । हा२इरा२३४औ
र　२ १ १११
होवा । ण्या३या२३४५ः ॥ २२ ॥

५ र ४ ५र　४र ५ ४　१ १र
(आपद्मासम् ॥) पुनानःसोमधारया । अपोव
२र र　५ २　५ २　१र २ १र र　२ १ २
सानोअर्ष । स्यो३हा । ओ३हा । आरत्नधायोनिमृतस्य
र　५ २　५ २　१ २　५
सीद । स्यो३हा । ओ३हा । उत्सोदा२इवा२ः । ओ
२　५ २　१　२　१
३हा । ओ३हा । हिरण्या२३या३४३ः । ओ२३४५इ ।
डा ॥ २३ ॥

(सोमसाम॥) पुनानःसो५मधारया। आपो२वामा
२। नोअर्षसी। आ२त्नाधा२ः। योनिमार्त्ता२।
स्यसीदसी। उत्सो२दाइवा२ः। हिरण्या२३या३४३ः।
ओ२३४५इ। डा॥२४॥

(ऐडमायास्यम्॥) आइपुना। नाःसो। मधा
रया। आपोवसा३१। नोअर्षसी। आरत्न धा३१ः।
योनिमृता। स्यसीदसी। उत्सोदेवा३१ः। हिरण्या
२३या३४३ः। ओ२३४५इ। डा॥२५॥

(माण्डवम्॥) पुनानःसोमधारया। पोवसोवा।
नोअर्षसि। आरत्न। धाउवा२३। होवा३हाइ। योनि
मृतस्यसीदसि। उत्सोदे। वाउवा२३। होवा३हाइ।
हिरण्या२३या३४३ः। ओ१३४५इ। डा॥२६॥

(उद्वत्प्राजापत्यम्॥) पुनानःसोमधा। हो५रया।
अपोवसानआहो२। वासी२। आरत्नधायोनिमतस्यसा

होरइ। दासी२। उत्सा२होश्इ। दा२३इवो३।

हिरो२३४वा। ण्यापुयो६हाइ॥ २७॥

(त्रीणिधनमायास्यम्॥) पुनानःसोमधा३हा३उहोवा।

रायाआ२३४पो। वसा२। नआ३४५। षा२३४सी।

आरा३४। औहोवा। त्वधायोनिमृता२। स्यसा३४

५इ। दा२३४सी। उत्सा३४। औहोवा। दाइवी२।

हिरा३४५। ण्या२३४याः॥ २८॥

(कण्वरथन्तरम्॥) पूनानःसोमधारया। अपोवसा।

नो३आर्षा३सौ। आ२त्वधायोनिमृतस्यसीदसा२३४ऐही।

उत्सोदा२३३इवाः। हिरा३१उवा२३। ए३। ण्ययआ

॥ २९॥

(तिरश्चीनिधनमायास्यम्॥) पुनानःसोमधारया।

ए३। औ३होपुवा। आपो३। वसा२। नआ३४५।

षा३सी२। आ२त्वधाः। योनिमृता। स्यासा३आ।

२ ४ ५ २ १ २ १ १
औ३हो३। दा२३४सी। उत्साऔ३हो। दाइवोर्२।
३ २ २ १ १ १ १ १
हिरा३४५। एया३या२३४५ः॥ ३०॥

५ र र र र र र र
( सदोविशीयम्॥ ) पुनानःसोमधारयाओहाओहा३ए।
५ र र र ५ १ १ र २ र र १ २ ५ २ ५ १
औहोऔहो६वा। अपोवसानोअर्ष। स्यो३हा। ओ२हा
१ ५ १ ५ २ १ १ र २ १ र र २ १ २ र
३ए। औ३होइ। औ३हो३वा। आरत्नधायोनिमृतस्यसीद।
५ २ ५ २ १ ५ २ ५ २ २
स्यो३हा। ओ३हा३ए। औ३होइ। औ३हो३वा।
१ २ ५ १ ५ २ २ ५ २
उत्सोदा१इवा२ः। ओ३हा। ओ२हा३ए। औ३होइ।
५ २ २ १ २ ५ र र २ र
औ२हो३वा। हिर। एया२या२३४औहोवा। सदो
१ ३ १ १ १ १
विशा२३४५ः॥ ३१॥

२
( स्ववासिनी द्वे॥ ) ओ२हो१। वाओवा। २।
२ १ २ ५ र र २ र
ओ२हो१। वाओवा३। ओ२वा२३४औहोवा। पुना
१ २ र १ र २ र १ र १ र र १ र २ १ र र
नःसोमधारया। पोवसानोअर्षसि। आरत्नधायोनि
२ १ २ र १ र र र १ २
मृतस्यसीदसिउत्सोदेवाः। ओ२हो१। वाओवा। २।

२ १ २ ५र र २
ओ२हो१। वाओवा३। ओ२वा२३४औहोवा। ए३।
र १ १११ १
हिरण्यया२३४ः॥ ३२॥

२ ३ २ १ ३ ५र र
ओ३। हो१। वाओवा३। ओ२वा२३४औहोवा।
१र १ २र १र २र १र २र र १र २१र र
पुनानःसोमधारया। पोवसानोअर्षसि। आरत्नधायो
२१ २ र २ १ ३
निमृतस्यसीद। स्यो३। हो१। वाओवा३। ओ२वा
५र र १ २र र१र र १ २
२३४औहोवा। उत्सोदेवोहिरण्ययः। इडा२३भा३४३।
१
ओ२३४५इ। डा॥ ३३॥

२ २ २ २ ३ ५
(पुषः॥) हा। वे३हा३। वो३हा। हा। ओ२३४वा।
२ ३ ५ २ ३ ५ २ ३
हाइ। पूनाना२३४ःसो। माधारा२३४या। आपीवा
५ २ ३ ५ २ ३ ५ २
२३४सा। नोअर्षा२३४सी। आरत्ना२३४धाः। योनी
३ ५ २ ३ ५ २ ३ ५ २
मा२३४र्त्ता। स्यासीदा२३४सी। उत्सोदा२३४इवो। हाइ
३ ५ २ २ २ ५
रण्या२३४याः। हा। गे३हा। वे३हा३। हा।
३ ५ २ ५र र २ १ २ १ २र
ओ२३४वा। हा३४। औहोवा। ए३। अतिविश्वानि
१र २ र३ १११
दुरितातरेमा२३४॥ ३४॥

(रौरवम् ॥) पुनानःसोमा३धारा२३४या । आपो
वसानोअर्षस्यारत्नधायोनिमृतस्यसा२इदसाइ । ओहा३
उवा । उत्सोदेवोहिरा२३हाइ । ओहा३उवा । ण्यया ।
औ३होवा । होधूइ । डा ॥ ३५ ॥

(यौधाजयम् ॥ पुना२१ । ना३ःसो । म । धारा
२३४या । आपो३ । वसा२ । नआ३४५ । षा२३४सी ।
आरात्नधाः । यो । निमृता२ । स्यसा३४पुइ । दा२३४सी ।
उत्सा२ः । दाइवो२ । हिरा३४५ण्या२३४याः ॥ ३६ ॥ ४५

॥ इति चतुर्थस्यार्द्धः प्रपाठकः ॥

भरद्वाजादयः सप्त ऋषयः* । हे "सोम !" "पुनानः" शोधकः "अपः" वसतीवरीः† "वसानः" आच्छादयन् "धारया" "अ-र्षसि" गच्छसि द्रोणकलशे किञ्च "रत्नधा" रमणीयानां धनानां दाता‡ त्वम् "ऋतस्य" यज्ञस्य "योनिं" स्थानम् "आसीदसि"

---

* "सर्वेषां सप्त ऋषयो भरद्वाजः कश्यपो गोतमोऽत्रिर्विश्वामित्रो जमदग्निर्वसिष्ठ इत्येते"-इति श्रुति-कोषेयः । सर्वेषामेतद्गणत्वानां द्वादशानामित्यर्थः ।

† "अपः उदकानि"-इति वि० ।

‡ 'रत्नानाम् धारयन्'-इति वि० ।

अथ द्वितीया ।

२ ३ १ २ ३ २उ ३ १ २ ३ २ ३ २
परितोषिञ्चतासुतꣳसोमोयउत्तमꣳहविः ।
३ १र २र ३ २ ऽ२उ ३ २ ३ २ ३ १ २
दधन्वाङ्योनर्योअप्स्वा३न्तरा*सुषावसोममद्रिभिः ॥ः ॥४६†

५ र र २
( अच्छिद्रम् ॥ ) परीतोषी । चता३१उवार३ । हर
५ १र ऽर १ २ १ २ १ ५र र २
३४ताम् । सोमोरयउत्तमꣳहवीः । सोमोयउ । त्तमा
५ २ १र र ऽर १ २ १र
३१उवार२३ । हा२३४वीः । दधन्वाꣳयोनर्यो२प्सुवन्तरा ।
५ र १ ऽर १ २
दधन्वाꣳयाः । नर्यो२ । आ । प्सवा३१उवा२३ । ता
५ २ १र र ३ ५ र २
२३४राः । सुषावसोममद्रिभो२३४ः । सुषावसो । ममा
५
३१उवार२३ । द्रा२३४भीः ॥ १ ॥

अपि च "देवः" द्योतमानः सोमः "उत्सः" प्रस्यन्दनशीलः सन् "हिरण्ययः"‡ देवानां हिततमशीयोऽ¶ भवसि खलु ॥

"देवो"-"देव"-इति साम्नऋचः पाठौ ॥ १ ॥ ४५

* "स्वं २तरा"-इति ऋ० स्वरपाठः ।

† उ० ५, २, ११, १=ऋ० ७, ५, १२, १=जग्ने ५, २, १,—२—३—४—५—६; —७, १, २—४;—७, २, ३—४;—८, १, ३;—८, २, ४;—९, ३, ७—११;—११, १, १८;—१२, २, २०;—१५, १, ६;—१५, २, १२—१३—१४;—१६, १, ५—६;—१९, १, १८—जघ्ने १, १, २—३—४—५—६—७—११;—२, २, ६—१० ।

‡ "ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि ( पा० ६, ४, १७५ ) ।

¶ 'हिरण्ययः अमृतमयः'-इति वि० ।

(रयिष्ठम्॥) परीतोषी। चताद्ध३ताम्। औ३-

हो३वा। औ२हो३वा। ई३या। ई३या३४। हा।

हाउवा। सोमो२यउत्तमꣳहवोः। सोमोयऊ। त

माꣳहा३वीः। औ३हो३वा। औ३हो३वा। ई३या।

ई३या३४। हा। हाउवा। दधन्वाꣳयोनर्यो२प्सुवन्तरा।

दधन्वाꣳया:। नर्यौ२। आ। प्सू३वान्ता३रा। औ३

हा३वा। औ२हो३वा। ई३या३४। हा। हाउवा।

सुषावसोममद्रिभौ२३४:। सुषावसो। ममाद्री३भाइ।

औ२हो३वा। औ३हो३वा। ई३या। ई३या३४। हा।

हाउवा३। ऊ२३४पा॥ २॥

(भारद्वाजे द्वे॥) औहोइपरीतोषी। चतासुतम्।

औ२होइ। औहोइ। आ३। औहो३वा। सोमो-

२यउत्तमꣳहविः। औ२होइ। औहोइ। आ३। औ

हो३वा। दधन्वाꣳयोनर्यो२प्सुवन्तरा। औ२होइ। औ-

१ ५ १र २ १र र २ ५
होइ। आ३। औहो३वा। सुषावसोमद्रिभिः। औ

२ ३र २ १ ५ ५
३होइ। औहोइ। आ२३४। उऊवाई३ हाउ। वा॥ ३॥

४ ५ २र १ ५र १
प। यैपारी। तापिञ्चतार२सुतम्। आउवा२३।

२र ३ २र ३ ५ १ १र ५र १ १ १ १ १
हाउहाउ। हो३वा। सोमो२यउत्तम७ हविः। आ-

२र ३ २र ३ ५ २ १र र ५र
उवा२३। हाउहाउ। हो३वा। दधन्वा७योनर्यो२

१ २ १ २र ३ १र ५ २ १र
अ्प्सुवन्तराउ। वा२३। हाउहाउ। हो३वा। सुषावा

२ २र १ २र १ ५ १ ३ २ १
२३सो३। हाउहाउ। हो३वा। मम। द्रा२३४इभा

५ ५
इ। उऊवाई३ हाउ। वा॥ ४॥

५ र र र १र
(आभीशवम्॥) परितोषिञ्चतासुतम्। ए। सो-

र १ ७ २ १ ५ १ १र र
मोयज३त्ताम७ हाविः। दा२३४धा। हाइ। न्वा७यो

र ७ २ २ ५ २ १ र २ १
नर्योअप्सुअन्तारा। इ२३४षा। हाइ। वासोममोर-

५ ६
३४वा। द्रा५इभोई हाइ॥ ५॥

५ र र र
(उत्तरमाभीशवम्॥) परीतोषिञ्चतासुतम्। ए।

२र र १ ७ १ २ ५ २ २
ए। सोमोयऊ३त्तामᳲ ह्वाविः। दा२३४धा। हा३हाइ।
१र र र ७ २ ३ ५ २ १ १
न्वाᳲयोनर्यों अप्सुअन्तारा। हा२३४या। हा३हाइ। वा
र २१ ५ ४ ५
सोममो२३४वा। द्राघुइभोईहाइ॥ ६॥

४ ५र ४र ५ र ४ १र
(माण्डवम्॥) परीतोषिञ्चतासुतम्। इहा। सो
र २१ २ १२ १र र र २
मोयउत्तमᳲ हा२३वोः। इहा। दधन्वाᳲयोनर्यों अप्सु
१ २ १२ १र २ १२
वन्ता२३रा। इहा। सुषावा२३सो। इहा। ममा२३।
१ २ ५र र ३ ५
द्रा२इभा२३४औहोवा। ई२३४हा॥ ७॥

४ ५र ४र ५ र ४
(माण्डवमुत्तरम्॥) इहा। परीतोषिञ्चतासुतम्।
१र र २१ २ १२ २
इहा। सोमोयउत्तमᳲ हा२३वोः। इहाउवा३। ऊ३-
५ २ १र र र २१ २ १२
४पा। दधन्वाᳲयोनर्यों अप्सुवन्ता२३रा। इहाउवा३।
२ ५ २१र २ १ २ २ ५
ऊ३४पा। सुषावा२३सो। इहाहाउवा३। ऊ३४पा।
२१ २ १२ २ ५
ममद्रा२३इभोः। इहाउवा३। ऊ३२३४पा॥ ८॥

४ ५र ४र ५ र ४ २र १र
(अभीवासः साम॥) परीतोषिञ्चतासुताम्। सोमो

२ १ २१ ११ १ २ ५ २ ५
यउ । तमᳪं हवाइ: । दाधाऔ२३४वा । ऊ२३४पा ।
१र र र २ १ २ १र २ १ २
न्वाᳪंयोनर्योअप्सु वन्ता२३रा । सुषावा२३सो । मामद्रि
१ २ १
भिः । इडा२३भा३४३ । औ२३४५ई । डा ॥ ९ ॥

४ ५र ४र ५ र ४ ५ ५
( परिवासः साम ॥ ) परीतोषिञ्चतासुतम् । औहोवा ।
१र ४र १ २१ २ १ २ २ २ १
सोमो२यउत्तमᳪं हविः । दधान्वाᳪंयो३ । हा३हाइ । न-
४र १ २ १र २ २ १ २
र्यो२प्सुवन्तरा । सुषावामो३ । ह३हा । मामद्रिभिः ।
१ २ १
इडा२३भा३४३ । औ२३४५ई । डा ॥ १० ॥

४ ५र ४र ५ ४ ४ १र र
( वैणवम् ॥ ) परीतोषिञ्च । ताउसुताम् । सोमो
१ १र र र र
यउत्तामा२१२म् । हावी२: । दधन्वाᳪंयोनर्योअप्सु-
१ १र २ २१ ५
वा२१२ । तारा२ । सुषावा२३सो३ । ममो२३४वा ।
४ ५
द्राउइभोहाइ ॥ ११ ॥

१ र र १ र
( सौमक्रतवीयम् ॥ ) परीतोषा२इ । चतासुता२म् ।
१र १र १र २ १ ५ २
ऐहो२ । ऐहो२ । ऐहिहा२इ । उवा२इ । ई३या ।

११ख,

१र र १ १र १र
सामोयजू२। नमꣳहवो२ः। ऐहो२। ऐहो२।
१र २ १ ५ २ १ र र
ऐहिहा२इ। उवा२इ। ई३या। दधन्वाꣳयोनर्यो२।
१ १र १र १र २ १
प्सुवन्तरा२। ऐहो२। ऐहो२। ऐहिहा२इ। उवा
५ २ १ र १ १र
२इ। ई३या। सुषावसो२। ममद्रिभा२इ। ऐहो
१र १र २ १ ५ २
२। ऐहो२। ऐहिहा२इ। उवा२इ। ई३या३४३।
१
ओ२३४५इ। डा॥ १२॥

३ २ ३ ५ ३ २ ३ २ ३ ५ २ र
(गर्दः॥) उपाउप। उपा३१। उपाउप। परी
र ३ २र ३ ५ ३ २ ३ ५ ३ २ ३ २ ३ ५
तोषिञ्चतासुतम्। उपाउप। उपा३१। उपाउप।
२र र ३ २ १ १ ३ २ ३ ५ ३ २ ३ २ ३ ५
सोमोयउत्तमꣳहविः। उपाउप। उपा३१। उपाउप।
१ र र ५र २ ३ २र ३ २ ३ ५ ३ २ ३ २
दधन्वाꣳयोनर्यो३प्सुवन्तरा। उपाउप। उपा३१। उपा
३ ५ २ र र ३ २ ३ २ ३ २ ३ ५ ३ २ ३ २
उप। सुषावसोममद्रिभिः। उपाउप। उपा३१। उपा
४ ३ ५
३ऊ५पा६५६। ऊ२३४पा॥ १३॥

५ ५ ५ १ र र २ र
(प्रतोदः॥) हाउहाउहाउवा। परीतोषिञ्चतासु-
१ ३ १ १ १ १ ५ ५ ५ १ र र २
तम। उपा२३४५। हाउहाउहाउवा। परीतोषिञ्च

२ १ ३ १ १ १ १ ऽ ऽ ऽ
तासुतम्। इ्ला। उपार२३४५। हाउहाउहाउवा।
१ २ २ २ २ १ २ २ १ ३ १ १ १ १ ऽ
परीतोषिञ्चतासुतम्। अवोवृहत्। उपार२३४५। हाउ-
ऽ ऽ १ २ २ २ २ १ २ ऽ२ १ २
हाउहाउवा। परीतोषिञ्चतासुतम्। सोमोरयउत्त-
१ २ १ २ १२ २ ऽ२ १ २ १२ २ ३ १
मꣳहविः। दधन्वाꣳयोनर्योरप्सुवन्तरा। सुषावसोर-
१ १ १ ऽ ऽ ऽ ३ २१ ३ १ १ १ १
३४५। हाउहाउहाउवा। ए३। ममद्रिभीर२३४५ः॥१४॥

२, ३ ५ २ १
(महायौधाजयम्॥) हाओ२३४वार। हा३आ-
५ २ १ २ २ २ २ १ २ ऽ२ ऽ१
२३४वा। हाउवा। परीतोषिञ्चतासुतम्। सोमोरय-
२ १ २ १ २ १२ २ ऽ२ १ २ १२ २
उत्तमꣳहविः। दधन्वाꣳयोनर्योरप्सुवन्तरा। सुषाव-
२ २, ३ ४ २ १ ५ १
सोममा। हाओ२३४वा।२। हा३ओ२३४वा। हाउवा३।
२ १ १ १ १ १
द्रा३इभीर२३४५ः॥ १५॥

हे ऋत्विजः! "सुतम्" अभिषुतं "सोम" "इतः" अस्मात् कर्म्मणम् "ऊर्ध्वम्" अथवा अस्मात् प्रदेशादूर्ध्वं "परिषिञ्चत" वसतीवरीभिः। ["इतोषिञ्चत' इत्यत्र संहितायां छान्दसं रोरुत्वम्। आदेशप्रत्यययोरिति षत्वम्] "यश्च" सोमः देवानाम "उत्तमं" प्रशस्तं "हविः" भवति। अपिच "नर्य्यः"

अथ तृतीया ।

१ २ ३ १र २र ३ १र २र ३ १ २

आसोमस्वानोअद्रिभिस्तिरोवाराण्यव्यया ।

३ २३ २ ३क २र ३ २ ३ २ ३ १ २

जनोनपुरिचम्बोर्विशद्धरिःसदोवनेषुदध्रिषे ॥ २ ॥ ४७*

३ ५ २ र ५र १

( आश्म ॥ ) आ२३४सो । मस्वानो३आ । द्रा३भा

३ ५ १ १र र ५र १ १ २ ३

ओ२३४वा । तिरोवारा२णिअव्यया२३ । जानोओ२३४

५ १ २ ३ ५ १ ५र ५र १

वा । नापाओ२३४वा । रिचमुवेवोर्विशद्धरीर२३ः ।

१ २ ३ ५ १ २ ३ ५ ४

सादाओ२३४वा । वानाओ२३४वा । षुदा५ध्रिषाइ ।

४

हो५इ । डा ॥ १६ ॥

५र र र २ ३ ५

( सोमसाम ॥ ) हावासोमस्वा । नोअद्रा२३४इभीः ।

२ ३ ५ २ ५ २

तिरोवार२३४रा । णिया३१उवा२३ । षा२३४या । जनो

मनुष्याः न हितः "यः" च सोमः "अप्सु" वसतीवरीषु "अन्तर्" मध्ये वान्तर् "दधन्वान्" गच्छन् भवति । तं सोमम् "अद्रिभिः" ग्रावभिः अध्वर्युः "सुषाव" अभिषुतं चकार तं परिषिञ्चतेति समन्वयः ॥ २ ॥ ४६

* उ० ८, २, १९, १=ऋ० ७, ५, १३, ५=ज्यो ४, १, ९ ।

३ ५ २ २ ५ २
नार२३४पू। राइचामू२३४वोः। विश्वा३१उवार२३। द्धा-
५ २ ३ ५ २
२३४रीः। सदोवार२३४ने। पुदा३१उवार२३। धीर२३४
५
षे ॥ १७ ॥

४र५र र ४र ५ ४ २१र र र २
आसोमस्वानोअद्रिभाइः। तिरोवाराणिअव्या१या
१र २ १ २ ३र २
२। जनोनपुरिचामू१वोरः। विश्वाद्धा१रीरः। सदोव-
१ ३ २ १
नाइ। पूरदभ्रिषोर२३४पूइ। डा ॥ १८ ॥

३र ४र र ३र ४ ५ र २ ४र ५ ४ ५
आसोमस्वानोअद्रिभिः। तिरोवा३राणिअव्यया।
१र र ३ १ १ ऽ २
जनोनपुरिचमुवोर्विश्वाद्धरिः। औ२। ऊवाइ। होइवा।
१ र र १ ऽ २ १ २
सदोवनेषुदौ२। ऊवाइ। होइवा। धिषा। औ-
४ ५ ४
३होवा। होपूइ। डा ॥ १९ ॥

हे "सोम!" "अद्रिभिः" ग्रावभिः "स्वानः" अभिषूयमाणस्त्वम् "अव्यया"* अविमयानि "वाराणि" वालानि पवित्राणि "तिरस्" कुर्वन् व्यवधायकानि कुर्वाणः सन् "आ पवसे" आभिमुख्येन चरसि। "हरिः" हरितवर्णः स सोमः चम्वो-

---

* इयाडियेति कात्यायनवचनात् सिद्धम् (७,१,३९सू०)।

अथ चतुर्थी।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
प्रसोमदेववीतयेसिन्धुर्न्नपिप्येअर्णसा।
३ १२ २२ ३ १२ २२ ३ २ ३ १ २ ३ १ २
अꣳशोःपयसामदिरोनजागृविरच्छाकोशंमधुश्चुतं ॥४॥४८॥*

५ २ २ ३ ५
(त्रैणिधनमाग्नेयम्॥) प्रसोमदा। वावोता२३४याइ।
२ १ २ ५ २
सिन्धूर्नापाइप्यआ३१उवा२३। णा२३४सा। आꣳशोः-
३ ५ २२ १ २ २ ५
पा२३४या। सामदाइरोनजा३१उवा२३। गृ२३४वीः।
२ ३ ५ २ ५
आच्छाको२३४शाम्। मधा३१उवा२३। श्च२३४ताम्॥२०॥

३४२५ २ ४५२ ३
(अग्नेर्वैश्वानरस्य साम॥) प्रसोमदेववी। तयो२३४-
५ ३ ४ ३ ४ ५२ ३ ५ १ २ ३
हाइ। सिन्धुर्नपिप्येअ। र्णसो२३४हाइ। आꣳशोओर-
ंधिषवणफलकयोरुपरि स्थिते कलशे† "विशत्" प्रविशति। तत्र दृष्टान्तः—"जनोन" यथा जनः "पुरि" पुरे प्रविशति। स त्वं वनेषु काष्ठनिर्मितेषु पात्रेषु‡ "सदः" स्थानं "दधिषे" "दधिषे"-इति, साम्न ऋचः पाठौ॥ ३॥ ४७

* उ० १, २, २०, १=ऋ० ७, ५, १४, १=आर० २, २, १५—१६=ऊहे १,२, १३;—६, २, १३;—८, १, १२;—९, २, १७—१८;—११, १, १७;—१४, १, १४; —१८, १, १२—१३—१४;—१९, २, १७;—२२, १,६=ऊह्ये ६, १, ५।

† 'आनडुहचर्मणि'-इति वि०।

‡ 'वनेषु उदकेषु' इति वि०।

५　१ २ २　५　४र　३र ४ ५र　२
३४वा । पायाओ२३४वा । सामद्रिरानजा । गृ२३३ ।
५ ५　१ २ २　५ १ २　४
वोईहोइ । आक्काओ२३४वा । कोशाओ२३४वा । मधूपुश्च-
४
ताम् । होपुइ । डा ॥ २१ ॥

२ १र　४र ४र
( द्विहिङ्कारंवामदेव्यम् ॥ ) प्रसोमार२३देववीतयाइ ।
२　र र र र　२ १र २　१
साइन्धुर्नपिप्येअर्णसा॰शोः पयसामदिरोनजौहाइ । ऊ-
१ २　१र र　१ २र २　१
म्मा२ गृ२२३वोः । अक्काकोशाम्मधौहो३ । ऊम्मा२ ।
१　५ ५　४
श्रुताम् । औ२३होवा । होपुइ । डा ॥ २२ ॥

२ ४र　र २ ४र५ र　२ २
( उत्सेधः ॥ ) प्रसोमदेववीतये । सिन्धुः । नपा३४-
३र ४र ५　१र १　२ २
औहोवा । प्येअर्णसा२ । हा२१उवा२३ । ऊ३४पा ।
२ २ ४　५र ४ ५　१ २१ २र १ र
श॰शोः३ःपया । औहोवाहाइ । सामदिरो । नजागृविः ।
२ ५　२ १ ४र　५र ४
हा३१उवा२३ । ऊ३४पा । अक्का३कोशम् । औहोवा-
५　२ २ ४　२ १ १ १ १
हाइ । मधू३श्चूपुता६५६म् । ऊ२३४५ ॥ २३ ॥

५र र　५र　१ १ २१
( निषेधः ॥ ) प्रसोमदाइवाईवीतयाइ । सिन्धूर्नपा-

अथ पञ्चमी।

१ २ ३ २ ३ २ ३१ ३ २ ३१२
सोमउष्वाणःसोतृभिरधिष्णुभिरवीनाम्।

२र १ १२ १ २ ४ ५ २
इ। प्ये अर्णसा २। इहा३। आ०ओ३ःपाया। हा-

३ ५ १ २१ २र १ २ १ २
हो२३४हा। सामदिरो। नजागृ२३वीः। इहा३।

१ २ ४ ५ २ ३ ५ ३२ ४
आच्छा३कोशाम्। हाहो२३४हा। मधू३श्चुताई५-

२ १ १ १ १
ईम्। हे२३४५॥ २४॥

हे "सोम!" त्वं "देववीतये" देवानां पानाय* तदर्थम् "अर्णसा" वसतीवर्याख्येनोदकेन "प्रपिप्ये" प्राप्यायसे। तत्र दृष्टान्तः—"सिन्धुः न" यथा सिन्धुरुदकेन प्रप्यायते तद्वत्† [प्यायतेः लिटि लिडयङोश्चेति पीभावः] ततः स त्वं "मदिरः" मदकरः सुरादिरिव "जागृविः" जागरणशीलः‡ [यद्वा न सम्प्रत्यर्थे, इदानीं मदकरो जागरणशीलस्त्वं "अंशोः" लताखण्डस्य "पयसा" रसेन "मधुश्चुतं" मधुररसस्य चारयितारं "कोशं" द्रोणकलशं "अच्छ" अभि¶ गच्छसि॥ ४॥ ४८

---

* 'देववीतये देवतर्पणाय'-इति वि०।

† 'प्रपीप्ये प्रवर्द्धते पूर्यते वा'-इति वि०।

‡ 'जागृविः जागरणशीलः अप्रमत्तः'-इति वि०।

¶ 'अच्छ आप्नुम्'-इति वि०।

१ १ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अस्वये* वद्धरितायातिधारयामन्द्रयायातिधारया ॥५॥४९†

४ ५ २ र १
( सोमसामानिषट् ॥ ) हाउसोमा । उवाणाइ सो
१ १ २ १ २ १ १ र र १ ऽ २ १ र
त्व१भोर२ । आधिष्णुभिरवीरनाम् आस्वौ३हो । येवद्धरि-
र र १ १ २ २ ५र ४ ५
तायाताइधा१राया२ । मन्द्राया३या३४ । हाओवा ।
१ १र ३ १ १ १ १
तिधारया१२४५ ॥ २५ ॥

५र २ ४र५ ४र ५ १ २ र र
सोमऊ३वाणःसोत्वभाइः । आधिष्णुभिरवीनाम् ।
१ ३ ५ २ १ र र २ २ २ ३
आस्वये२३४वा । हरितायातिधा१रा३या । मन्द्राया
५ ३ ५ २ १ २ ४ ५ ४
२३४या । ता२३४इधा । रया । औ३होवा । हा५इ ।
डा ॥ २६ ॥

४र ५ र ४ ५र ४ ५ ४ ४ १ २
सोमउवाणःसोत्वभिः । ए५ । अधी । ष्णुभिरा३१-
५ १ २ १र र र २
उवा२३ । वो२३४नाम् । आ२३स्वा । येवद्धरितायातिधा
५ १ ० २ १ र २
३१उवा२३ । रा२३४या । मा२३द्रा । यायातिधा३१उवा-
५
२३ । रा२३४या ॥ २७ ॥

---

* 'अश्वया इव = अश्वया यथा शीघ्रं गच्छति, तद्वत् शीघ्रगामिन्या' इति वि० ।

† उ० २, २, १२, १ = ऋ० ७, ५, १३, ३ = अष्टे १, १, ५ —६—७—८, — २०, १, १९—२० ;—२०, २, १—कण्डे ६, १, १—३—१० ;—६, २, ६ ।

४र ५ र ४५र ५ ५ ४ ॥ १ २ १ ऽर १
सामउष्वाणःसोहृभिः। ए५। अधौ। ष्णुभिरवीर। नाम्।
२र १ ० १ र २र १ २
आस्वयेव। चारितायार। ताइधारया। मान्द्रयायौवा।
१ ५ २१ २ ४ ५ ४
तीर३४धा। रया। औहोवा। चो५इ। डा॥ २८॥
४र ५ र ४५र ४ ५ ४ ५ ४५र
सोमउष्वाणःसो। हृ। भाइ। अधिष्णुभिरवो। नाम्।
१ २ १ २१ऽर १ र २ १र र
आधिष्णुभिरवीर। नाम्। अव्ययेवा। चरितायाता
२ ५ २ २
२३इधा। रया३१उवार३। मार३४०द्रा। यायाती
५ २२ १र ४५ ३
२३४धा। रयाऔहोवा। चो५इ। डा॥ २९॥
१र ४ र ३ ४र ५ ऽ १ १
सोमउष्वाणःसोहृभिः। औ३चो३इ। आर३४।
५ ४ ५र १ १र र र १ २
धिष्णुभिरवीनाम्। आव्ययेवचरिताया। निधारायौ।
२ ५ २१ र २ २ ऽ
वाओर३४वा। मन्द्रयायातीरधा। ऊ३म्‌ ऊ३४३म्।
२ ५
रा३४५योऽ६हाइ॥ ३०॥ ४९

॥ इति ग्रामे गेये चतुर्द्दशः प्रपाठकः॥

"सोहृभिः" सुधृद्भिः "स्तानः" सुवानोऽभिषूयमाणः "सोमः" "अवीनां सुभिः" [मांसपृत्व नामुपसंख्यानमिति वार्त्तिकेन सानुसन्दस्य सूभावः] समुच्छ्रितैर्वालैः पवित्रैरधियाति अधि

अथ षष्ठी ।

२ १ २  २ १ २  २ १ २
तवाहꣳसोमरारण*सख्यइन्दो दिविदिवे ।
२ १ २  २ १ २  १ १ २  २२ ३ २उ  ३१  २
पुरूणि†बभ्रोनिचरन्तिमामवपरिधीꣳरतिताꣳइहि ॥ ६॥ ५० ‡

५ २  १  १
( वैष्णवम् ॥ ) ओं ॥ तवाहꣳसो । मरा२रणा ।
२  १  २  २  २
रण । सख्यइन्दोदिवा२इ । दिवाइ । दिवे । पुरूणिबभ्रो-
१  २  १
निचरन्तिमा२मवा । मव । परिधीꣳरतिताꣳ२इहा२इ ।
१  २  ५२ २  २  ५
आ२इ । हा२३४ । औहोवा । ऊ२३४पा ॥ १ ॥
४५२  ४  २ १ २
( द्वितीयंवैष्णवम् ॥ ) तवा । तवा । अहꣳसोम-

अधिकं गच्छन्ति । "उ" इति प्रसिद्धौ । "बभ्रयेव" बभ्रवर्णेव हरितवर्णया धारया याति । "मन्द्रयाधा¶" मदकारिण्या धारया द्रोणकलशमधि गच्छति ॥ "उभ्याणः" "उपुवाणः"—इति पाठौ ॥ ५ ॥ ४९

---

* 'रारण रमयाथि । अथवा रणतिस्तुतिकर्मा मम स्तुतिं कुर्मः'-इति वि० ।

† 'पुरूणि बहूनि दुःखतानि । अथवा बहूनि यजमानकुलानि चरन्ति'-इति वि० ।

‡ उ० ३, १, ११, १ = ऋ० ७, ५, १५, ४ = ऊह्ये २, १, ९ — १० — ११ ;—९, १, १० ;—१२, २, १—२ ;— १६, १, १५-१६—१७ — १८ ;—१९, २, १ ;—२०, १, १४—१५—१६ = ऊह्ये २, १, १२ ;—१, २, ४ ;—५, २, १२ ;—६, १, ११—१६ ।

¶ 'मन्द्रया बभ्रवया'-इति वि० ।

र २ २ १ २ १
रारण। सख्याई३०द्दो। दिवाऔ३द्दो। दाइवे२।

१र र २ २ १ १ २ २ १
पुरूणिबभ्रो निचरन्तिमा१मा३वा। पराऔ३द्दो। धाइ९-

२ १ ५ ४ ५
रतितार३४वा। आ५इद्दोइद्दाइ॥ २॥

५र र र ५र
( आङ्गिरसानित्रीणि॥ ) तवाह९सोमाइरारण।

२ ३ ५ २ २ ५ ४ २र ४ र २ ४
साख्याई२३४०द्दो। दिवेदा२३४इवे। पुरूणिबभ्रो निच-

५ र १ ५ ४ ५ ४ ५ २१
रन्तिमाम्। आवा२३४द्दाइ। पारीधाइ९रा। तिता

५ ४ ५
२३४वा। आ५इद्दोइद्दाइ॥ ३॥

४५र४ ५र र ४ ४ १ २ १
तवाह९सोमरी। द्दो५रणा। साख्यइन्दो२।

२ २ ३ ५ १ १ १र
द्दिवा४४५इ। दी२३४वे। पूरू२णाइबा२। भ्रोनिच-

२ २ ३ ५ १ १
रार। तिमा३४५म्। आ२३४वा। पारी२धाइ९

२ २ १ ५
रार। तिता९३४५। ई२३४द्दी॥ ४॥

३४र३ ४र १ र २१र ४ र ५ २ १
तवाह९सोमरारण। सख्यइन्दो दिवेदिवाइ। सख्य

र २१र २ १र र २ १र २
इन्दो दिवेदा२३इवे। पुरूणिबभ्रो निचरन्तिमामा२३वा।

अथ सप्तमी ।

२ ३ १ २    २ ३१ २ ३१ २
मृज्यमानःसुहस्त्या * समुद्रेवाचमिन्वसि ।
२ १ २ ३१ २ ३ १ २ ३ २ १ २ ३ १ २ ३क २र
रयिंपिशंगम्बहुलम्पुरुस्पृहंपवमानाभ्यर्षसि ॥ ७ ॥५११

१ २ १ २ १
पराइधार२३इ॰९रा। तिता९२३इधा३४३इ॥ ओर२३४५
ई। डा ॥ ५ ॥

( स्वारमौक्ष्णोरन्ध्रम्॥) मृज्यमानाः। सुहस्ति-

हे "इन्द्रो" सोम! तव "सख्ये" सखिकर्म्मणि अहं "दिवे दिवे" अन्वहं "रारण" रमे [रमेर्लिटि उत्तमे णलि रूपम् हे] "वभ्रो" वभ्रुवर्ण! सोम "पुरूणि" बहूनि रक्षांसि "मां" तव सख्ये स्थितं "न्यवचरन्ति" नीचीनं चरन्ति बाधन्ते। ये मां बाधन्ते तान् "परिधीन्" ‡ रक्षसान् त्वम् "अतीहि" आगच्छ ॥ ६ ॥ ५०

---

* "सुहस्त्य"-इति ऋ० सं० ।

† उ० ४, १, १२, १ = ऋ० ७, ५, १६, १ = आर० ५, १, १२=ऊह्य २, २, १—२—३—४—५ ;—८, १, ५—६ ;—२०, २, ७—८ ;—ऊह्य ६, १, १९ ।

‡ 'परिधीन् अतीहि-ये अन्ये यजमानाः परिचरन्ति, तेभ्यः परिधीन् स्तरणान् अतीत्य इहि मदीयं यज्ञमायाहि। अथवा दुःकृतानि ये कुर्वन्ति अतीत्य तेषां परिधीन् आयाहि'-इति वि० ।

१ २ ४ ५ २ १ २ ४
याइ। साम्३द्राइवा। चमिन्वसाइइ। रायो३०पाइ-
५ २ १ ५ ५ १ १र
श्रा। गम्बक्रुलाइम्। पूरुरस्पृ२३४हाम्। पवमा।
१ १ २ १ ५ ४ ५
ना। औ३हो। भियै२३४वा। षा५सोई्द्दाइ॥ ६॥

५ र २ १
(औक्ष्णोरन्ध्रम्॥) मृज्यमानाः। सुहस्ताया२।
१ २र र १ ० २१ २१ १
समुद्रेवा। चामिन्वासा२३४इ। रया३४इंपिशा। गम्ब
० १ १ २ ५र र
क्रुलंपूरुस्पृहा२म्। पवा२३। मा२ना२३४औहोवा।
१ ५र २ १११
भिया२र्षसी२३४५॥ ७॥

५ र १ १ २ १
मृज्यमानाः। सुह। स्तिया। सा१मू२द्राइवा२।
१ २ १ १ २ १ २
चमि। न्वसाइ। रा१यो२०पाइश्रा२। गंवक्रुलंपुरु।
१ १ २ १ २ ५र र
स्पृहाम्। पा१वा२माना२३। भा२या२३४औहोवा।
५
षा२३४सी॥ ८॥

५ ५ १र
(आग्नेयानित्रीणि॥) मृज्याइ१ए। मानःसुहस्तिया
२ २ १र र २ २ १
औ३हो। समुद्रेवाचमिन्वसाऔ३हो। रयिंपिशङ्गंबक्र

२ १ १ २ २ १ ५
वंपुरुस्पृहाऔ३हो । पवमार२३ना३ । भियोर२३४वा ।
४ ५ ५
षा५सो६हाइ ॥ ८ ॥

५ ४ ५र ४ ५ २ १
मृज्यमानः सुहस्तेया । वाहाइ । समद्राइवा ।
० २ ५ २१ २१ १ २ १०
चमोर्न्वार२३४सौ । रया३४इंपिशा । गंवङ्गलम् । पुरु-
२१ २र२ २ १ ५ ४
स्पृहा२३४म् । पवा३४मानार३ । भियोर२३४वा । षा
५
५सो६हाइ ॥ १० ॥

४ र ४ १ १ १
मृज्यमाना५ः सुहस्तिया । समू२द्राइवा२ । चमा-
१ १ २ २ १
२ह्न्वासी२ । रयिंपिशङ्गंबङ्गलंपुरुस्पृहाऔ३हो । पव
२ २१ ५ ४ ५
मार२३ना३ । भियोर२३४वा । षा५सो६हाइ ॥ ११ ॥

५ ४ ५र र
( ऐडमौक्ष्णोरन्ध्रम् ॥ ) मृज्यमानःसुहस्त्या । समु
र ४ ५ १ २ १ ७ २ २ २
द्रेवावा । चामिन्वसि । रायिंपिशा३ । हा३हा ।
१ ११ २१२ १ र २ १
गंवङ्गलंपुरुस्पृहम् । पवमाना३ । हा३हा । भियर्षा
२ १
२३सा३४३इ । ओ२३४५इ । डा ॥ १२ ॥

अथाष्टमी।

२३१र २र ३ २ ३ १ १ ३ २ ३ १ १
अभिसोमासआयवःपवन्तेमद्यम्मदम्।

५ ४ ५र ४ १
(वाजजित्॥) मृज्यमानःसुहस्त्या। स्तियार।

१ १ र १ २र १
समू२द्रो। इवा२द्रो। चामिन्वमाइ। रया२यिं

१ १ २१ २र १
चोइ। पिशा२ङ्गो। गंवङ्गलाम। पूरुस्पृहाम्।

१ र १ २र १ २ २र
पवा२द्रो। माना२द्रो। भौयर्षसा३१उवा२३। वा

१र २ २
जीजिगी३वा३१॥ १२॥

हे "सुहस्त्य" हस्ते भवा हस्त्याः अङ्गुलयः,* शोभनाङ्गुलिक सोम! "मृज्यमानः" शोध्यमानस्त्वं "समुद्रे" अन्तरिक्षे † कलशे वा "वाचं" शब्दम् "इन्वसि" प्रेरयसि ‡। किञ्च। हे पवमान पूयमान सोम! "पिशङ्गं" हिरण्य रजतादिभिः पिशङ्गवर्णं "बहुलं" प्रभूतं "पुरुस्पृहं" बहुभिः स्पृहणीयं "रयिं धनं" "अभ्यर्षसि" स्तोतॄणामभिगमयसि प्रयच्छसीत्यर्थः॥ ७॥ ५१

* "सुपांसु (७, १, ३९)"-इत्यादिना सुप आलेरूपम्।

† "समुद्रः"-इति अन्तरिक्षनामसु पञ्चदशं नैघण्टुकम् (१, ३)।

‡ "इन्वति"-इति गतिकर्मसु पञ्चदशाधिकशततमं नैघण्टुकम् (२, १४)। व्याप्तिकर्मसु च प्रथमम् (२, १८)। अतएव 'इन्वसि व्याप्नोषि'-इति वि०।

२ १२ २२३१२ ३ १ २
समुद्रस्याधिविष्टपेमनीषिणो

३ १ २ ३ १ २
मत्सरासोमदच्युतः ॥८॥ ५६*

२ २ २ २ १ २
( वैश्वदेवेद्वे )। हाउहाइ। अभिसोमासाउआया-
२ २ २ १ २
१वा२३ः। हाउहाइ। पवन्तेमदोउयांमा१दा२३म्। 
१ २ २ २ १ २
हाउहाइ। समुद्रस्याधिविष्टपेमाउनाइषा१इणा२३ः।
२ २ २ १ २ २ २
हाउहाइ। मत्सरासोमाउदाच्यू१ता२३ः। हाउहा-
१
३४३इ। ओ२३४५इ। डा ॥ १४ ॥

४ ५ ४ ५ १ ५ ४ ५
आभीसोमा। सआ३१उवा२३। या२३४वाः। पाव
४ ५ २ ५ ४ ५ ४
न्ताइमा। दिया३१उवा२३। मा२३४दाम्। सामुद्र-
५ २ १ २१ २ ५ ४ ५
स्या। धिविष्टापेमना३१उवाये३। षी२३४णाः। मात्सा
४ ५ २ ५
रासाः। मदा३१उवा२३। च्यू२३४ताः ॥ १५ ॥

---

* ड० २, २, ९, १ = ऋ० ७, ५, १४, ४ = ऊहे २, १, १४—१५;—४, २, ७—८—९—१०—११—१२;—७, १, ११;—७, २, १४—१५—१६;—८, १, १६; —८, २, १८;—९, २, १५;—९, ३, ६;—१२, १, ३;—१२, २, १६;—१४, १, ९; —१४, २, ५—७; = १६, २, २—३;—१८, २, १—३—१०;—२१, २, १० = ऊह्ये १, १, ६;—१, २, ११; —२, २, ९;—३, १, १०;—४, २, १०;—६, १, ९—१४।

२ १ २ ३र ३र १ २र
(इन्द्रसामनोद्वे।) अभिसो३मासआयवाः। पवन्ते
१ २१ २ २ १ १ २ १
मदियम्। दा। औ३र्चो। आऔ३र्चो। समुद्र-
र २ १र२र १ २ २ १ २ २
स्याधिविष्टपेमनीषि। णा। औ३र्चो। आऔ३र्चो।
१रर २ १ २ २ १ २ २
मत्सरासोमदच्यु। ता। औ३र्चो। आऔ३र्चो ३४-
१
३। ओ२३४५इ। डा॥ १६॥

५ ४र ५र र ४ ४ १ र
अभिसोमासआ। यो५यवाः। पवन्तेमद्यम्मदम्प-
र २१ १ १र
वन्तेम। दियाउच्चोइ। मा२३दाम्। समुद्रस्याधिविष्ट-
र र २१ २ १रर
पेमनीषिणाः। मनाच्चोइ। षा२३इणाः। मत्सरासोमद
२१ २ १
च्युताः। मदाच्चोइ। च्यू२३ता३४३ः। ओ२३४५इ। डा।
॥ १७॥

१ ३र२ ३र४ र
(स्वः पृष्ठम्॥) अभा२इसोमा३४। औहोपुसआ-
४ १ ३र२ ३र४ ४ १
यवाः। पवा२ंतेमा३४। औहोपुदियम्मदाम्। समू-
२२ ३र४ ४ ११ १२
२द्रस्या३४। औहोपुधिविष्टपाइ। ओये३। मा२ना२३४-

२ र          २      ५      २      ५         २   २र   १
औहोवा । पीर२३४णाः । जर२३४पा । २ । मत्सरासोर३ ।
१   १    ५र   र       २   ५
मार्दार३४औहोवा  च्यू२३४ताः ॥ १८ ॥

                              ४र  ५र  ४        ५   ४र  ५र
( इन्द्रसामानित्रीणि ॥ )  औहोवा । अभिसोमास-
र  ४  ५      ४र  ५र  ४      १      २र  १     ४
आयवः ।  औहोवा । पवार् । तेमा३ओपुवा६५६ । दि-
२ १ २      १      २ २    ४       २   १ ५र   र
यमादम् । समूर् । द्रसा३ओपुवा६५६ । धिविष्टपेरमनी-
१ ५र      ५   २         २र  २   ४
षिणार: । औ३हो३१३ । मत्सार् । रासा३ओपुवा६५६ ।
२   १  २   १११२
मदच्युता२३४५: ॥ १९ ॥

५   र   र    र     ५     १       २र  २   ४
अभिसोमासआयाइवाः । पवार् । तेमा३ओपुवा-
२  १ २    १     २ २   ४          २
६५६ । दियमादम् । समूर् । द्रसा३ओपुवा६५६ । धिवि-
१ ५र   र १ ५र      १      २र २    ४        २
ष्टपेरमनीषिणार: । मत्सार् । रासा३ओपुवा६५६ । मद-
१  २ ११११
च्युता२३४५: ॥ २० ॥

५   र   र   र    ५      १          २
अभिसोमासआयाइवाः । पवन्ताइमा । दियार्ंमा-

अथ नवमी।

२ १२ ३ १२ ३१३ २३ १२३२
पुनानःसोमजागृविरव्यावारैः*परिप्रियः।
१र २र ३१
त्वं विप्रोअभवोऽङ्गिरस्तम
२ ३ १ २
मध्वायज्ञं मिमिक्षणः‡ ॥८॥ ५३¶

५ ३ २ १ २ १ २ ४ ५
२३४दाम्। समुद्रस्या। धिविष्टपाइ। मनाइइषाइणाः।
१ १र १ १ ३ ५र र ३ ५
मात्सरासोर३। मा२दा२३४औहोवा। च्यू२३४ताः॥२१॥५२

"आयवः"§ गमनशीलाः "सोमासः" सोमाः मद्यं" मदकरं मदं आत्मीयं रसं "अभिपवन्तः" अभितो निर्गमयन्ति। कुत्रेत्युच्यते—"समुद्रस्य" अन्तरिक्षस्य "अधिविष्टपे" अधिकं समुच्छ्रितपवित्रे। यद्वा। समुद्रस्य यस्मात्समुद्रवन्ति रसाः तस्य कलशस्य "अधि" उपरि "विष्टपे" स्थाने "पवित्रे" निर्गमयन्ति। कीदृशाः? "मनीषिणः" मनसईशितारः "मत्सरासः" मदकराः "मदच्युतः" मदकरेण रसेन च्यावयितारः॥

"विष्टपे", "विष्टपि"—"मदच्युतः", "स्वर्विदः"—इति च पाठौ॥८॥५२

* "अव्योवारे"-इति
† "वोङ्गिरस्तमो"-इति,  } ऋ०।
‡ "मिक्षनः"-इति च
¶ ऋ० ७, ५, १३, १।
§ 'आयवः मनुष्याः'-इति वि०। 'आयवः'-इति मनुष्यनामसु सप्तदशं नैघण्टकम् (२, ३)।

अथ दशमी ।

१ २ २ ३ २ १ २ ३ १ २ ३ १
इन्द्रायपवतेमदःसोमोमरुत्वतेसुतः ।

५ र ४ ५र ४र ५ ४ १रर
(सोमसाम ॥ ) पुनानःसोमजागृविरव्याः । वारैःपा-
० १ र र २ २
रिप्रिया२ः । त्वंविप्रोअभवोङ्गाइरा२३४ । स्तमा३ ।
१ २र १ १ ३ ५र र ३ ५
माध्वायज्ञा२३म् । मा२इमा२३४औहोवा । सा२३४ना: ।
॥ २२ ॥ ५३

हे सोम! "जागृविः" जागरणशीलः "प्रियः" प्रीणयिता* त्वं "पुनानः" पूयमानः सन् "अव्याः" मेष्याः "वारैः" वालैर्निर्मिते दशापवित्रे परिचरसि। "अङ्गिरस्तम" हे अङ्गिरसां वरिष्ठ! "विप्रः" मेधावी त्वं पितॄणां नेता "अभवः"† भवसि। स त्वं "नः" अस्मदीयं "यज्ञं" "मध्वा"‡ मधुना आत्मीयेन रसेन "मिमिक्ष"§ सेक्तुमिच्छसि। मिहेः सेचनार्थस्य (भ्वा० प०) सनि रूपम् ॥ ८ ॥ ५३

---

* 'प्रियः प्रियतरः, भूतानां प्रियः'-इति वि० ।

† 'सार्वकालिको लङ्' ( ३, ४, ६ ) ।

‡ सुप आले रूपम् ( ७, १, ३९ ) ।

¶ 'मिमिक्ष सिञ्च' इति वि० ।

३ १ २ ३ १र २र ३
सहस्रधारो अत्यव्यमर्षति
१ २ ३ १ २
तमीमृजन्त्यायवः ॥ १० ॥ ५४*

५ र २ १ १र र
इन्द्रायपा। वता२इमादा२ः। सोमोमरुत्वता२इ-
१ १ २र १ १
न्द्रता२ः। स। हास्रधारः। अतिअव्यमा२र्षाती२।
१ १ २ १
तमा२इमार्जा२। तिआयार३वा३४३ः। ओ२३४५इ।
डा ॥ २३ ॥

५ र २ र १
(स्वःपृष्ठमाङ्गिरसम् ॥) इन्द्रायपा। वतेमदाः।
१र र १ १ १ १ २र
सोमोमारु२। त्वतेन्द्रो२इ। न्द्रता२ः। स। हास्रधारः।
१ २ ३ ५ ३ ५ १
अतिअव्यमा। षाताओ२३४वा। ज२३४पा। तमीन्द्रो-
१ १र २ १
२इ। मार्जा२। तिआया२३या३४३ः। ओ२३४५इ।
डा ॥ २४ ॥

५ र २ ४ ५ ४ ५ १र र
(सोमसाम ॥) इन्द्राया३पावताइमदाः। सोमोम-
२ २ १ २र १ २
रुत्वता१इन्द्र३ताः। स। हास्रधारः। अतिअव्यमा३।

---

* ऋ० ७, ५, १५, २।

अथैकादशी ।

१ २       ३ १  २ ३  १र  २ र  ३  १  २
पवस्ववाजसातमोभिविश्वानिवार्य्या ।
१    २ ३ १  २ ३ १र   २र
त्वꣳसमुद्रःप्रथमविधर्म
३ १ २            ३ २
न्देवेभ्यःसोममत्सरः ॥ ११ ॥५५ *

४ ५     १ १  २   २        ४  ५      १  २       ५र  र
पाती । तमाश्रौ३इस्रो३द्ब । माजा । तार्श्वा२३४औहो
२        ५
वा । या२३४वाः ॥ २५ ॥

४ ५  र    ४र              ३      ५       २ १    २र
पवस्ववाजसा । इच्हा । तार३४माः । अभिविश्वा-
१    २र      १    १     ५र र       १ २  १र  २
निवारिया । त्वꣳसार्मू२३४औहोवा । द्रःप्रथमेविधर्म-
२     २        १   ३    ५र र        २  ३
न् । दाइवाये३ । भ्यार्ःसो२३४औहोवा । ममत्स-
२
रा१ः ॥ २६ ॥ ५४

"मदः" मदकरः "सुतः" अभिषुतः "सोमः" "मरुत्वते" मरुद्भिस्तद्वते "इन्द्राय" इन्द्रार्थं "पवते" चरति । ततः "सहस्रधारः" बहुधारोपेतः सोमः "अव्यम्" अविमयं पवित्रम् "अत्यर्षति" अतिगच्छति तमिमं "आयवः" मनुष्या ऋत्विजः "मृजन्ति" शोधयन्ति ॥ १० ॥ ५४

---

* ऋ० ७, ५, १६, ३ ।

अथ द्वादशी।

१२          १ २३१ ३ १ १

पवमानाअसृक्षतपवित्रमतिधारया।

३१२         ३१२ ३ १२२२२

मरुत्वन्तोमत्सराइन्द्रियाहया

३२ ३ १२२

मेधामभिप्रयाᳪसिच ॥१२॥५६*

॥ इति तृतीय-दशति ॥

४५ २ २               ४         १      २

(पवित्रम् ॥) पवमानाअसृक्षतपवाइ। त्रामतिधार

हे "सोम!" "विश्वानि" सर्वाणि "वार्या" वरणीयानि स्तोतॄणि† "अभि" लक्ष्य "वाजसातमः" अतिशयेनान्नस्य सम्भक्तस्व "पवस्व" चर। हे सोम! "देवेभ्यः" देवानां‡ "मत्सरः" मदकरः "समुद्रः" समुन्दनशीलः¶ "विधर्मन्" विशेषेण पोषक!॥ त्वं "प्रथमे" मुख्ये श्रेष्ठे यज्ञे देवेभ्यस्तदर्थं चर॥

"विधर्मन्"-"विधारयम्"-इति, "वाजसातये"-"वाजसातमः"-इति, "वार्या"-"काव्या"-इति च क्रमेण साम्नश्च पाठाः॥ ११॥ ५५

---

* ऋ० ७,५,१६,५।

† 'वार्या वरणीयेन उदकेन' इति वि०।

‡ "षष्ठ्यर्थे चतुर्थीति वाच्यम्"—इति का० (पा० २, ३, ६२)॥

¶ "समनतीतिवा" इत्यादि निरुक्तोक्तेः (२, १०)। 'समुद्रः समुद्रसंस्थानीयः' इति वि०।

‖ "विधर्मन्=विधर्मणि, विविधकर्मणि कर्मकारणे देवे' इति वि०।

१ र र २ २ १ २
यामरुत्वन्तोमत्सराइन्द्रो३याः। हयाः। मा२३इधाम्।
१ २ १ ३ ५र र ३ ५
अभायें३। प्रा२या२३४औहोवा। सो२३४चा ॥ २७ ॥५६

"पवमानाः" पूयमानाः सोमाः "धारया" आत्मीयया "पवित्रम्"* "अति" अतीत्य "असृक्षत" सृज्यन्ते। कीदृशाः? "मरुत्वन्तः" मरुद्भिर्युक्ताः "मत्सराः" मदकराः "इन्द्रियाः" इन्द्रजुष्टाः। "मेधां"† स्तुतिं "प्रियांसि" अन्नानि च "अभि" लक्ष्य स्तोतृभ्य उभयं कर्त्तुं वा "हयाः" यज्ञे गन्तारः सृज्यन्ते ॥१२॥५६

इति श्रीमत्सायणाचार्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य पञ्चमखण्डः ॥ ५ ॥

॥ इति बार्हतम् ॥

---

* "पवित्रं पुनातेः। मन्त्रः पवित्रमुच्यते। 'येन देवाः पवित्रेणात्मानं पुनते सदे'त्यपि निगमो भवति॥ रश्मयः पवित्रमुच्यन्ते। 'गभस्तिपूतो नृभिरद्रिभिः सुत' इत्यपि निगमो भवति॥ आपः पवित्रमुच्यते। 'शतपवित्राः स्वधया मदन्ती' बहूदकाः॥ अग्निः पवित्रमुच्यते। वायुः पवित्रमुच्यते। सोमः पवित्रमुच्यते। सूर्यः पवित्रमुच्यते। इन्द्रः पवित्रमुच्यते। 'अग्निः पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्रः पवित्रं ते मा पुनन्तु' इत्यपि निगमो भवति" इति (नि० ५,६)।

† 'मेधां प्रज्ञाम्'-इति वि०।

अथ षष्ठेखण्डे—

सैषा प्रथमा।

१र १र३१२३२ ३ १२ ३१ १ ३ २३१र १र
प्रतुद्रवपरिकोशंनिषीदनृभिःपुनानोअभिवाजमर्ष।
३ १ २३ १ २३१२१ २ ३
अश्वंनत्वावाजिनंमर्जयन्तोच्छा
१ २ ३ १ २
बर्हीरशनाभिर्नयन्ति ॥ १ ॥ ५७ *

२ ३५ ३२ २१
(अशनम्॥) ओइप्रतु। द्रुवा३१। द्रवा। परि
२ २३४५ २ ३५ ३२ २१
कोश। शन्निषीदा। औइनभिः। दुवा३१। पुना।
२ १ २३ ४५ २ ३४ ३२ २१
नो३अभि। वाजमर्षा। आअश्वम्। दुवा३१। नत्वा।
२ १ २३४५ २३५ ३२ २१
वा३जिनम्। मर्जयन्ताः। ओअच्छ। दुवा३१। बर्हीइः।
१र २ २ ४
रशना। भा३४३इः। ना३या५न्ताई५६इ ॥ २८ ॥

४५ ४५ २१ २१
(वृषौशनं साम ॥) प्रतु। एप्रतू। द्रवा। द्रवा।
२ २३४५ ४५ ५ २१
परिकोश। शन्निषीदा। नृभिः। एनृभिः। पुना।
२१ २ १ २ ३४५ ४५ ४५
पुना। नो३अभि। वाजमर्षा। अश्वम्। एअश्वाम्।
२१ २१ २ १ २३४५ ४५ ४५
नत्वा। नत्वा। वा३जिनम्। मर्जयता:। अच्छ। एअच्छा।

* छं० १, १, १०, १=ऋ० ७, ३, २२, १=जटे १, १, ४—१९, १, ०।

२ १　२ १　२ १र २　३ २　५　५
वर्चाइः । वर्चाइः । रश्नाभिः । नये३४ । ह्वियाह्वा-
२ ११११
उवा । ता२३४५इ ॥ २९ ॥

४ ५ ४　१　र
( जानस्याभीवर्तौद्वौ ॥ ) प्रतुद्रा । वापरिक्रोशाम् ।
२　२　१ २　३र २　३र ५ २ १
निषी३दा । साइदा । औहोइ । औहो३वा । नृभिः
रर　७　२　१ २　३र २
पुनानोअभिवा । जमा२३र्षा । आर्षा । औहोइ ।
३र ५ २　१　र र　७
औहो३वा । अश्वन्नत्वावाजिनम्मा । जया२३न्ताः ।
१ २　३र २　३र ५ २　१र २ १　२
यांता । औहोइ । औहो३वा । अच्छावर्चाइः । रश्न-
१र २　३ २　५　५　२ ११११
नाभिः । नये३४ । ह्वियाह्वाउवा । ता२३४५इ ॥ ३० ॥

५र　५　३ २　५ ५　२ १
ह्वाओ६ह्वा । उऊवा३४ । ओ६ह्वा । प्रतुद्रवा ।
२　२ ३ ४ ५　२ १　२ १　२ १
परिक्रो३ । शन्निषीदा । नभाइःपुना । नो३अभि ।
२ ३ ४ ५　२ १　२ १　२ ३ ४ ५
वाजमर्षा । अश्वन्नत्वा । वा३जिनम् । भर्जयन्ताः ।
र　५　३ २　५ ५　२ १र २ १
ह्वाओ६ह्वा । उऊवा३४ । ओ६ह्वा । अच्छावर्चाइः ।
२ १ र　२　२ ४
रश्ना । भा२४३इः । ना३या५०ता६५६इ ॥ ३१ ॥

४ ५ १ र

(त्रिष्टुबौशनम् ॥) प्रात्। द्रवापरिकोशाम्।

२ र १ २१ २ १ २ ३ ४ ५

निषीरदा। नृभाइःपुना। नो३अभि। वाजमर्षा।

१ र र ७ २ १र २ र

अश्वन्नत्वावाजिनम्मा। जया२३ंताः। अक्काबर्हीइः।

२१र २ १ ४

रशना। भा३४३इः। ना३या५॰ता६५६इ ॥ ३२ ॥ ५७

उशनाऋषिः*। हे सोम! "नु" क्षिप्रं † "प्रद्रव" प्रगच्छ आगत्याच "कोशं" द्रोणकलशं परिनिषीद" निषसोभव। "नृभिः" नेतृभिः "पुनानः" पूयमानः "वाजम्" अन्नं यजमानार्थमुद्दिश्य "अभ्यर्ष" [वाजं सङ्ग्रामं वा] "वाजिनं" बलवन्तं "अश्वं न" अश्वमिव तं यथामार्जयन्ति तद्वत् ताम् "अर्जयन्तः" शोधयन्तः "बर्हिः" यज्ञम् अच्छ "प्रतिरशनाभिः" रशनावदायताभिरङ्गुलीभिः "नयन्ति" अध्वर्युप्रमुखाः ॥ १ ॥ ५७

---

* "काव्यः"-इति ऋषि नै०।

† 'अच्छ आप्तुम्'-इति वि०। मन्त्रश्रुतौ 'अच्छा'-इति दीर्घो निपातत्वात् (६, ३, १३६ पा०।)

‡ 'रशना यूपयोजनी'-इति वि०।

¶ "नु-इत्येषोनेककर्मा, इदन्नु करिष्यतीति हेत्वपदेशे, कथन्नु करिष्यतीत्यनुपृष्टे, नन्वेतदकार्षीदिति चाथाप्युपमार्थे भवति वृक्षस्य नु ते पुरुहूतवयाः वृक्षस्येव ते पुरुहूत शाखाः"-इत्यादि नि० १, ४। "नु"-इति क्षिप्रनामसु च प्रथमन्नैघण्टुकम् (२, १५)।

§ 'बर्हिः प्रवृद्धम्'-इति वि०।

‖ 'रशनाः'-इति अङ्गुलिनामसु षष्ठं नैघण्टुकम्।

अथ द्वितीया ।

१　१२ ३ १ २　३ २ ३ २ ३ १ २ १ २
प्रकाव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति ।
१ २ ३ १　२　३ २
महिव्रतः शुचिबन्धुः पावकः
३ १ २ ३ २ ३क १२ ३ १ २
पदा वराहो अभ्येति रेभन् ॥ २ ॥ ५८*

४ऽ　१र　१
(वाजसनीद्वे ॥) प्रा । काविया २म् । उशनेवा २ ।
१　२　१र र　१र　१
ब्रुवा२३णाः । देवोदेवा २ । नाञ्जनिमा २ । विवा-
२　१　१　१　१
२३क्तो । महिव्राता २ः । शुचिबन्धू २ः । पवा२३काः ।
१ र　१र　३ २　५र र　३
पदावारा २ । होअभिया२इ । तिरा३४औहोवा । भा
१ १ १ १
२३४५न् ॥ ३३ ॥
१ र　१　१　१र र
प्रकाविया २म् । उशनेवा २ । ब्रुवाणा २ः । देवो
१र　१　१
देवा २ः । नाञ्जनिमा २ । विवाक्तो २ । महिव्राता २ः ।
१　१　१ र　१
शुचिबन्धु २ । पवाका २ः । पदावारा २ । हो २ ।
२ १　५र र　१ १र ३ १ १ १ १
भिया३४औहोवा । तिरेभा२३४५न् ॥ ३४ ॥

---

* उ० ४, २, १, १= ऋ० ७, ४, १२, २=जद्वे ६, १, ५ ;— १६, २, १९ ;— २१, १, ३—६ ।

२ र　　र　　१ २　　१
( वाजजित्साम ॥ ) प्रकाव्यमुशनेवब्रू३वाणों । देर-

५　　२र र र　　र　　१ २　　३　　५　　१
३४वाः । देवानाञ्जनिमावी३वाक्तौ । मा२३४ची । व्रतः

१ २　　३　　५　　२ र र　　र १
शुचिबन्धुः पा३वाकः । पा२३४दा । वराहोअभ्येतिरा

२　　　१ १ १ १
२३ । हाउवा३ । भा२३४५न् ॥ ३५ ॥

५र　　र　　१　　२ १ र
( वाराहम् ॥ ) हाउहाउ । ऊप् । प्रकावियाम् ।

२ १ र　　२ ३ ४ ५　　२र१र र　　२　　१　　२
उशने । वब्रुदाणाः । देवोदेवा । ना३०जनि । मावि

४ ५　　२ १　　　　२　　२ ३ ४ ५　　र
वक्तौ । मह्विव्रताः । शुचिवा३ । धुःपवाकाः । हाउ

र　　१　　२ १ र　　२　　१　　२
हाउ । ऊप् । पदावरा । हो३अभि । आ३४३इ ।

२　४
तीश्रा५इभा६५६न् ॥ ३६ ॥

॥ इति पञ्चदशस्यार्द्धः प्रपाठकः ॥

वृषगणो वासितऋषिः* । "उशने एव" तन्नामकऋषि-
रिव "काव्य" कविकर्म्म स्तोत्रं "ब्रुवाणः" "देवः" स्तोता †

* "वृषगणो वासिष्ठः"-इति ऋषि- नै० ।

† 'देवः सोमः'-इति वि० ।

अयमृषिर्वृषगणोनाम "देवानाम्" इन्द्रादीनां "जनिमा" जन्मानि* "प्रविवक्ति" प्रकर्षेण वदति। [ वच परिभाषणे ( अदा०प० )। व्यत्ययेन विकरणस्य श्लुः (३,१,८५) बहुलं छन्दसीति (७,४,७८) अभ्यासस्य इत्वम् ] "महिव्रतः प्रभूत-कर्मा†। "शुचिबन्धुः" बध्नन्ति गृह्णन्तीति बन्धूनि तेजांसि बलानि वा दीप्ततेजस्कः‡ "पावकः" पापानां शोधकः "वराहः" वरश्च तदहश्च वराहः [ "राजाहःसखिभ्यष्टच्"-इति टच् समासान्तः। तस्मिन्नहनि अभिषूयमाणत्वेन तद्वान्। अर्शआदित्वा-न्मत्वर्थीयोऽच् ] तादृशः¶ सोमः "रेभन्" शब्दं कुर्वन् § "पदानि" स्थानानि पात्राणि "अभ्येति" अभिगच्छति। यद्वा। यदा कश्चन वराहः "पदा" पदेन भूमिं विक्रियमाणः शब्दं करोति तद्वत्॥ २॥ ५८

---

* 'जन्मानि कर्माणि वा'-इति वि०।

† 'महिव्रतः महतः कर्मणः यज्ञस्य वा धारयिता' इति वि०।

‡ 'शुचिबन्धुः शोभनबन्धुः शुद्धबन्धुर्वा'-इति वि०।

¶ 'वराहः सोमः'-इति वि०। "वराहो मेघो भवति वराहारः। वरमाहार माहार्षीरिति च ब्राह्मणम्। विध्यद्वराहन्तिरो अद्रिमस्तेत्यपि निगमो भवति। अयमपीतरो वराह एतस्मादेव। वृहति मूलानि वरं वरं मूलं वृहतीति वा। वराह-मिन्द्र एमुषमित्यपि निगमो भवति। अङ्गिरसोऽपि वराहा उच्यन्ते 'ब्रह्मणस्पति वृषभिर्वराहैः। अथाप्येते माध्यमिका देवगणा वराहव उच्यन्ते—'पश्यन् हिरण्यचक्रा नयो दंष्ट्रान् विधावतो वराहून्"-इति नि० ५, ४।

§ 'रेभन् स्तुवन्' इति वि०।

अथ तृतीया।

१ १र २र ३ १र ३र ३ १ २ ३ १र २र ३ २
तिस्रोवाचईरयतिप्रवह्निर्ऋतस्यधीतिंब्रह्मणोमनीषाम्।
१ २ ३ १ २ ३ १ २ ३
गावोयन्तिगोपतिंपृच्छमानाः
१ २ ३ १ ३ २
सोमंयन्तिमतयोवावशानाः॥ ३ ॥ ५९*

१ २ १
(संक्रोशास्त्रयः॥) होइ। हो। हा३होइ।
२ १र र २ १ २ ३ ४ ५ १ १
तिस्रोवाचा। ई३रय। तिप्रवह्नीः। होइया२३होइ।
२ १र र २ १ २ ३ ४ ५ २र १ १
तिस्रोवाचाः। ई३रय। तिप्रवह्नीः। आ। होइया२३होइ।
२ १र र २ १ २ ३ ४ ५ १ २ १
तिस्रोवाचाः। ई३रय। तिप्रवह्नीः। होइहा। इहोइहा।
५ २ २ १र र २ १ २ ३ ४ ५
औ३हो३१इ। इहा। तिस्रोवाचाः। ई३रय। तिप्रवह्नीः।
१ २ १ ५ २ २ १र र
होइया। इयोइया। औ३हो३१इ। इया। तिस्रोवाचाः।
२ १ २ ३ ४ ५
ई३रय। तिप्रवह्नीः॥ १ ॥

३ २ ३ ५ २र १
(वेणोर्विशाले द्वे॥) इहोइह। इहोइहा३हो।
३र २ ३ ५ २ १र र २ १ २ ३ ४ ५ ४र
वाहोइह। तिस्रोवाचाः। ई३रय। तिप्रवह्नीः। इहो

* उ० २,२,१०,१=ऋ० ७,४,१७,४=ऊहे २,१,१७=ऊह्ये ३,२,६।

२ १　　२ ५　　४　　४
वा५। इहोवा२३। ई३४हहाइ। ई५। इहा।

२ १र र　　२ १　　२ ३ ४ ५　　२ १
तिस्रोवाचाः। ई३रय। तिप्रवक्रीः। इहोवा२३।

२ ५　　४　　२ १र र　　२ १　　२ ३
ई३४हहाइ। इहा। तिस्रोवाचाः। ई३४रय। तिप्र-

४ ५　　१ २ २　　१ २ २　　५र र
वक्रीः। आऔ३हो। आऔ३हो३४। औहोवा।

२ २　　१र र　　२ १　　२ ३ ४ ५　　१
हा३हाइ। तिस्रोवाचाः। ई३रय। तिप्रवक्रीः। आ।

२ र र २　　३र ४र ५　　२ १र र　　२
औ३होवाहा३४। औहोवा। तिस्रोवाचाः। ई३

१　　२ ३ ४ ५
रय। तिप्रवक्रीः॥ २॥

२र २　　४ ५ ४ २　　२ १　　२ १
ओहो३। ओहाओहा। ऋतस्यधाइ। तौ३०ब्रह्म।

२ ३ ४ ५　　१ २ १　　२ ३र २ १　　१र १र
णामनीषाम्। हहोइ। हहाहहो३। गावोयन्ताइ।

२ १　　२ ३ ४ ५　　१ २ १　　२ ३र २ १
गो३पतिम्। पृच्छमानाः। इहोइ। इहाहहोइ।

२र १　　२ १　　२　　२ ४
सोमंयन्ताइ। मतयः। वा३४३। वा३शा५नाः६५६ः॥

॥ ३ ॥ ५९

१५ख,

पराशरऋषिः*। "वह्निः" वोढा यजमानः "तिस्रो वाचः" ऋग्यजुःसामात्मिकाः स्तुतीः प्रेरयति। तथा "ऋतस्य" यज्ञस्य "धीतिं" धारयित्रीं† "ब्रह्मणः"‡ परिवृढस्य सोमस्य "मनीषां" मनस ईशित्रीं कल्याण-वाचं च प्रेरयति। किञ्च। "गोपतिं"¶ वृषभं यथा गावोऽभिगच्छन्ति तद्वत् गवां स्वामिनं सोमं "गावः" "पृच्छमानाः" पृच्छन्त्यः सत्यो "यन्ति" स्व-पयसा माश्रयितु मभिगच्छन्ति। तथा "वावशानाः" कामयमानाः "मतयः" स्तोतारः§ "सोमं" "यन्ति" स्तोतु मभिगच्छन्ति‖॥ २ ॥ ५९

* "शाक्त्य"-इति ऋषि-नै०। "पराशरः पराशीर्णस्य वसिष्ठस्य स्थविरस्य जज्ञे। पराशरः शतयातुर्वसिष्ठ इत्यपि निगमो भवति। इन्द्रोऽपि पराशर उच्यते पराशातयिता यातूनाम् इन्द्रो यातूना मभवत् पराशर इत्यपि निगमो भवति"-इति नि० नै०६,३०॥

† 'धीतिं कर्म'-इति वि०।

‡ 'ब्रह्मणो मनीषां वेदोक्तानि कर्माणि'-इति वि०।

¶ 'गोपतिं यजमानं दक्षिणासम्बन्धेन पृच्छमान' इव, वृषभं वा' इति वि०।

§ मतय इति स्तोतृनामसु न दृश्यते परं मेधावि-नामसु द्वाविंशतितमं घण्टुक-मिति लक्ष्यते (३,१५)। 'मतयः बुद्धयः'-इति वि०।

‖ यास्कव्याख्यानन्त्वित्थम्—"वह्निरादित्यो भवति स तिस्रो वाचः प्रेरयत्यृचो यजूंषि सामान्यतस्यादित्यस्य कर्माणि ब्रह्मणो मतान्येष एवैतत् सर्वमक्षरमधीत्यधिदैवतम् अथाध्यात्मं वह्निरात्मा भवति स तिस्रो वाच ईरयति प्रेरयति विद्यामतिबुद्धिमता मृतस्यात्मनः कर्माणि ब्रह्मणो मतान्ययमेवैतत् सर्वमनुभवत्यात्मगति माचष्टे"-इति (प०२,१४)॥ विवरणकारस्तु पूर्वं यथावत् व्याख्यायानन्तरमपरमपि व्याख्यानजालमा-विष्कृतवान्-तद्यथा—'यद्यपि पावमानीषु सोममुक्त्वा अन्या देवता न सम्भवति तथा-प्यष्टाद्ग्मे व्याख्यातेति कृत्वा तेनापि आत्मनानुस्मरणार्थ मालिख्यत। तिस्रो वाचः। ऋग्यजुःसामानि अथवा तिस्रो वाचः सत्वरजस्तमांसि अथवा जाग्रत्स्वप्नसुषुप्ति-इत्ययः। ईरयति प्रेरयति उदकरश्मींश्च वहतीति वह्निरादित्यः। ऋतस्य आदित्यस्य

अथ चतुर्थी।

२ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
अस्यप्रेषा हेमनापूयमानोदेवोदेवेभिःसमपृक्तरसम्।
२ १ ३ २ ३ १ २ २ १ २ ३ २ ३ १ २ ३ २ ३ १ २
सुतःपवित्रम्पर्येतिरेभन्मितेव सद्मपशुमन्तिहोता॥४॥६०॥*

३ १ ३र ४र ५ १र २
(अगस्त्यस्य यमिके द्वे॥) अस्या३४औहोवा। प्रेषा। हे३
१ र २ ३ ४ ५ ३ २ ४ २ ३र ४र ५
मना। पूयमानाः। उडुवाइ। अस्या३४औहोवा।
१र २ १ र २ ३ ४ ५ २
प्रेषा। हे३मना। पूयमानाः। हाइ। उडुवा।
३र २ ३र ४र ५ १र २ १ २ ३ ४ ५
देवा३४औहोवा। देवाइ। भीइःसम। पृक्तारसाम्।

धीतिः। अथवा ऋतस्य सत्यस्य ब्रह्मणः। अथवा ऋतस्य धीति यज्ञस्य वा आदित्यस्य वा हय इव 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते'। 'ब्रह्मणो मनीषा गावः रश्मयः तेन विसृष्टा अथवा उदकानि। एतमेव गोपति रश्मि-स्वामिनं वा पृच्छन्त इव सोमं यन्ति पृथिवीं वसाना सर्वोपकाराय सोमं आदित्यं मतयः। प्रज्ञायते विषयाः अतिप्रकाशन्त इति रश्मयः। वावशाना आदित्यं यन्ति प्रविशन्ति। अध्यात्मेऽग्निरात्मा भवति। वर्णादिगुणसंयोगात्। सः तिस्रो वाचः प्रेरयति। तिस्रो बुद्धिमनांसि। विद्या महान्। बुद्धिरहङ्कारं मनइति प्राधान्याद् भूतेन्द्रियाणि ऋतस्यात्मनः धीतिं मनसः दृष्टानि कर्माणि प्रेरयन्ति ब्रह्मणः आत्मनः। गोपाः गोपायति। आत्मानं इन्द्रियाणि स्वामिनं पृच्छमानाः। आत्मानं तदभिप्रायेण शब्दाद्यनुगमनात्। एतमेवमात्मानं सोमङ्कामयमाना इव यन्ति न भयः तदर्थं प्रादुर्भवन्ति'-इति।

* छ० ६, २, ८, १ = ऋ० ७, ४, ११, १ = ऋ९।९७।७

२ ५ १२ ३र४र ५ १ २ १
हाउ। होइ। सुता३४औहोवा। पवाइ। चा३म्परि।
२३४५ २र २ २ ३र४र५ १
एतिरेभान्। हा। हाऔहोइ। मिता३४औहोवा। वसा।
२ १ २ ३ ४ ५ १ २ २ ४
ङ्गा३पशु। मन्तिहोता। पशु। मा३४३। तीइहोपु
ताई५६॥ ४॥

१र १र ३र २ १ ३ २ १ र १ २र
औहोवाहा३होइ। इहा। अस्यप्रेषा। हे३मना।
२ ३ ४ ५ २र १र र २ १ २ ३ ४ ५
पूयमानाः। देवोदेवाइ। भीइःसम। पृक्तरसाम्।
२ १ २ १ २ ३ ४ ५ १र २र ३र २
सुतःपवाइ। चा३म्परि। एतिरेभान्। औहोवाहा-
१ ३ २ १र २ १ २
३होइ। इहा। मितेवसा। ङ्गा३पशू। मा३४३।
२ ४
तीइहोपुताई५६॥ ५॥ ६०

वसिष्ठऋषिः*। "अस्य" सोमस्य "प्रेषा" [प्रेषतिर्गत्यर्थः (भ्वा०प०) क्विपि रूपं। सावेकाच इति विभक्तेरुदात्तत्वं† प्रेषा] प्रेरकेण‡ "हेमना"¶ हिरण्येन "पूयमानः" हिरण्य-

* "मैत्रावरुणः"-इति ऋषि-नै०।

† "सावेकाचस्तृतीयादिर्विभक्तिः"-इति पा० ६,१,१६८।

‡ 'प्रेषा प्रकर्षेच्छया'—इति वि०।

¶ बाहुलकादल्लोपाभावः।

अथ पञ्चमी ।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २

सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः ।

७ १र २र ३ १र २र ३ १ २ ३ १र २र

जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥५॥६१*

२र र र १

(कालकाकन्दौ ॥) सोमः पवतेजनितामा३ताइना२म् ।

र र र १ १रर र

जनितादिवोजनितापृ३थाइव्या२ः । जनिताग्नेर्जनितासू ।

पाणिरभिषुणोतीति हिरण्यसम्बन्धः । तादृशः "देवो" दीप्यमानः अंशुः "रसम्" आत्मीयं "देवेभिः" देवैः सह† "समपृक्त" सम्पर्कयति संयोजयति । [पृची सम्पर्के ( अदा० आ० ] ततः "सुतः" अभिषुतः सोमः "रेभन्" शब्दायमानः सन् "पवित्रम्" ऊर्णास्तुकेन निर्मितं‡ "पर्येति" परिगच्छति । कथमिव ? "होता" देवाना माह्वाता¶ ऋत्विक् "मितेव" निर्मातेव§ "पशुमन्ति" बहुपशून् "सद्म" सदनानि यज्ञगृहान् यथा पर्येति तद्वत् ॥ ४ ॥ ६०

* उ० ३, १, १९, १ = ऋ० ७, ४, ६, ५ = ऊहे ३, २, १९ ;—८, २, १ ;—१२, १, १०—१६ ।

† 'देवेभिः देवेभ्यः वस्वादिभ्यः'-इति वि० ।

‡ दशापवित्रमित्यर्थः ।

¶ होतेति ह्वेञोरूपम् ( ६, १, ३४ पा० ) ।

§ 'मिता कर्त्ता' इति वि० ।

७ २ १र २ १ २ २
रियार३स्या। जनितेन्द्रा। स्या३जनि। तो३४३। तार
४
वा५इ्ष्णा६५६ः॥ ६॥

३ ४ ५ र र २ २ ४ १
सोम पवतेजनिता। ए३। औ३हो५वा॥ माता
२ १र २ १र २ १र २ १र
२३४५इ्ना६५६म्। जनितादिवोजनितापृथिव्याः। जना-
३ ५ २ र २ ४
२इ्तार३४ग्नेः। जनिता। सू३४३। री३या५स्या६५६।
२ १र २ १र ३ ११११
जनितेन्द्रस्यजनितोतविष्णोर३४५ः॥ ७॥

५र ४ ४ ५
(जनित्रे द्वे॥) हाउजनत्। ३। जनद्धाउ। ३।
१ १ २र १ २
होइ। जनत्। २। होइ। जनात्। सोमःपवा। ते३
१ २ ३ ४ ५ २ १र २ १ २ २
जनि। तामतीनाम्। जनितादाइ। वो३जनि। तापृ
५ ५ २ १र २ १ र २ ३ ४ ५ ५र
थिव्याः। जनिताग्नाइः। जनिता। सूरियस्या। हाउ
४ ४ ५ १
जनत्। ३। जनद्धाउ। ३। होइ। जनत्। २। होइ।
१र २ २ २ ४
जनात्। जनितेन्द्रा। स्या३जनि। तो३४३। ता३वा।
५इ्ष्णो६५६ः॥ ८॥

४ ५ ४ ५ १
जनद्वाउ । ३ । जनदाउ । ३ । जनत् । होइ । ३ ।
२र १ २ १ २ ३ ४ ५ २ १र
सोमःपवा । ते३जनि । नामतीनाम् । जनितादाइ ।
२ १ २ ३ ४ ५ २ १र २१र२ ३ ४ ५
वो३जनि । तापृथिव्याः । जनिताग्नाइ । जनितासूरियस्या ।
४ ५ ४ ५ १ र २
जनद्वाउ । ३ । जनदाउ । ३ । जनत् । होयि । ३ । जनि-
१ र २ १ २ २ ४
तेन्द्रा । स्या३जनि । तो३४३ । ता३वापृयिष्णो६५६ः

॥ ९ ॥ ६१

प्रतर्द्दनऋषिः* । "सोमः" अभिषूयमाणः "पवते" पात्रेषु चरति । कीदृशः ? "मतीनां" बुद्धीनां । यद्वा । मननीयानां स्तुतीनां "जनिता" जनयिता† [ "जनिता मन्त्रे" (६,४,५३ ) इति निपातेन णि-लोपः ] किञ्च "दिवः" द्युलोकस्य "जनिता" प्रादुर्भावयिता । तथा "पृथिव्याः जनिता" । "अग्नेः" "जनिता"

---

* "दैवोदासिः"-इति वि० ।

† अत्रेदं विवरणम्—'सोमः पवते । विनियोगोऽस्य चतुर्थेऽहनि । अधियज्ञपक्षे पर्णसोमस्य पृथिव्यादीनां । जनयितृत्वेन सम्भवात् । यज्ञद्वारेण स्थितिहेतुत्वात् जनयतीति जनिता मतीनां जनयिता दिवः जनयिताग्नेर्जनयिता सूर्यस्य जनयिता । इन्द्रस्य जनयिता । उत अपि विष्णोर्व्याप्तिमतइति । जनयिता पृथिव्यादिभ्यः रसेन वर्द्धयिता । अधिदैवेनेन्द्रः सोमः यद्यात्मनि तदायमर्थः । सर्वमिदं श्रयति । आत्मा सोमः पवते साधयति भोक्तृत्वात् । आत्मा सत्कारणं वा । प्रधानभूतेन्द्रियाणां जनयिता पृथिव्यादीनाञ्च द्यर्थो[illegible]यापि अग्न्यादीनाञ्च स्थानानां तिसृणां विष्णोश्च व्याप्तिमतः ॥ "

अथ षष्ठी।

३१ २६१र २र ३ १ २ ३ १२ ३ १ २
अभित्रिपृष्ठंवृषणंवयोधामङ्गोषिण*मवावशन्तवाणीः।
३१२ ३ १ २ ३ २उ ३ १ २ ३ १ २ ३ १ २
वनावसानोवरुणोनसिन्धु†र्विरत्नधादयतेवार्याणि॥ ६॥६२॥‡

२ २ ५ २ ३र २
(अङ्गिरसां व्रतीपोहः॥) ओ२हायि। ओ२हा। ओहा।
१ ५ २ २ १ २ १ २२
इया२। ओ२हा३इ। अभित्रिपा। ष्ठा३०वृष। णंव-
४ ५ २ १र २ १र २ ३ ४ ५
योधाम्। अङ्गोषिणाम्। अवाव। शन्तवाणीः।
२ १र २ १ ० ३ ४ ५ २ १ १ २
वनावसा। नो३वरुणोनसिन्धूः। ओ२हायि। ओ२-
५र २ १ ५र २ २ १
हा। ओहा। इया२। ओ३हा३इ। विरत्नधाः।
२ १ र २ २ ४ ५
दयते। वा३४३। रो३याणा६५६यि॥ १०॥ ६२

प्रकाशयिता। 'सूर्य्यस्य" सर्व्वप्रेरकस्यादित्यस्य "जनिता" "इन्द्रस्य" जनिता पानेन मदस्य जनयिता। "उत" अपि च। "विष्णोः" व्यापकस्य "जनिता" जनयिता¶। एतत्सर्वं सोमेऽभिषूयमाणे भवति सोमेन हि देवताप्यायन्तइति॥ ५॥ ६१

---

* "आङ्गूषाणाम्"-इति, † "सिन्धून्"-इति च } ऋ०।

‡ उ० ६, २, ११, १=ऋ० ७, ३, २६, २ = ऋक् ७, २, १७।

¶ अत्राह यास्कः—"सोमः पवते सोमः सूर्यः प्रसवनाज्जनिता मतीनां प्रकाशकर्मणा मादित्यरश्मीनां दिवो द्योतनकर्मणा मादित्यरश्मीनां पृथिव्याः प्रथनकर्मणा

अथ सप्तमी।

१ २　　३१ २३१र २र ३ १ ३ ३१र २र　　१ १
अक्रान्त्समुद्रः प्रथमे विधर्म्मञ्जनयन्प्रजा भुवनस्य गोपाः*।

वसिष्ठऋषिः†। "त्रिपृष्ठं" त्रीणि पृष्ठानि द्रोणकलशादिस्थानानि सवनानि वा यस्य स तथोक्तस्तम्। "वृषणं" वर्षकम्। "वयोधाम्" अन्नस्य दातारम्‡। "अङ्गोषिणं" आघोषन्तं सोमं¶ "वाणीः" स्तोत्ररूपा वाचः "अवावशन्त" कामयन्ते शब्दायन्ते वा। "वना" वनानि उदकानि "वसानः"। आच्छादयन् "वरुणो न" वरुण इव§ "सिन्धुः" अपां स्यन्दयिता पर्यन्तप्रदेशानाच्छादयति तद्वत्। "रत्नधाः" रत्नानां दाता सोमः "वार्याणि" धनानि‖ "दयते" स्तोतृभ्यः प्रयच्छति॥ ६॥ ६२

---

मादित्यरश्मीनां, सूर्यस्य स्वीकरणकर्मणामादित्यरश्मीनां, विष्णोर्व्याप्तिकर्मणा मादित्यरश्मीनामित्यधिदैवतम्। अथाध्यात्मं सोम आत्माप्येतस्मादेवेन्द्रियाणां जनितेत्यर्थः। अपिवा सर्वाभिर्विभूतिभिर्विभूततम आत्मेत्यात्मगति माचष्टे"—इति प० २, १२।

* "भुवनस्यराजा"—इति ऋ०।

† "मैत्रावरुणः"—इति ऋषि नै०।

‡ "सुतः", "सुतं", "वयः"-इति त्रीण्यपि पदानि पाठभेदात् सप्तमनैघण्टुकत्वेन श्रयन्ते (२, ७)। 'वयोधा मन्नानां धातारं यशस्विनं वा'—इति वि०।

¶ "आङ्गूषस्तोमआघोषः "एनाङ्गूषेण वयमिन्द्रवन्तः" अनेन स्तोमेन वयमिन्द्रवन्तः"—इत्यादि नि० ५, ११।

§ "वरुणः वृणोतीति सतः"—इत्यादि नि० १०, ३—४।

‖ 'वार्याणि वननीयानि धनानि'—इति वि०।

१ २ ३ २ ३ २ ३ २ ३ १ २ ३ १र २र ३ १र
वृषापवित्रे अधिसानो अव्येबृहत्सोमोवावृधेस्वानो*-

२र
अद्रिः ॥ ७ ॥ ६३†

२ १ १ २र १ २ १र २ १
(सम्यावैयश्वम् ॥)हो। होपि। अक्रांत्समुद्रःप्रथमेविधामान्।
१ २ १ २ १ २ र १ १ १ र
होहोयि। जनयन्प्रजाभुवनस्यगोपाः। हो। होयि वृ
२र १ २र १ २ १र र ऽ १ २ १
षापवित्रे अधिसाने। २अ। व्यायि। हो। हो। वृह
र र ७ र र र १र र २ र र २
त्सोमो२वावृधेस्वाने। अ। द्रा। औ३। होवाहाउवा
२ २र १र १ १ १ १
३। ए३। स्वानाअ। द्री२३४५ः॥ ११ ॥ ६३

पराशरऋषिः‡। "समुद्रः" अस्मादापः सन्द्रवन्ति स समुद्रः अपां वर्षकः। "गोपाः" यज्ञस्य रक्षकः सोमः "प्रथमे" विस्तृते "भुवनस्य" उदकस्य¶ "विधर्म्मन्" विधारकेऽन्तरिक्षे "प्रजाः" "जनयन्" उत्पादयन्"अक्रान्"सर्व्वमतिक्रामति [क्रमते-र्लुङि, तिपि, इड़भावे हलो च कृतायां सिज्लोपे मकारस्य

* "सुवान"—इति ऋ०।

† उ० ५, २, १, १=ऋ० ७, ४, १८, प= ऊहे १७, २, १;—२३, २, ५— ८—९; ऊह्ये६, २, ५।

‡ "शाक्त्यः"—इति ऋषि-नै०।

¶ "भुवनम्"-इति उदकनामसु पञ्चाशत्तमं नैघण्टुकम् ( १,१२ )।

अथाष्टमी।

१ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ ३ ३ १ २ ३ २
कनिक्रन्ति हरिरासृज्यमानः सीदन्वनस्य जठरे पुनानः।
१ २ ३ १ ३ ३ २ ३ १२ २२ ३ १ २ ३ १ २
नृभिर्यतः कृणुते निर्णिजङ्गामतोमतिञ्जनयतस्वधाभिः॥८॥६४ *

मोनोधातोरिति नकारे रूपम्] "वृषा" कामानां वर्षिता "स्वानः" अभिषूयमाणः† ॥

"अद्रिः"-"इन्द्रः" इति च साम्नृचः पाठौ ॥ ७ ॥ ६३

* ऋ० ७, ४, ५, १।

† अत्रेदं विवरणम्—

अक्रान् समुद्रः विनियोगोऽस्य नवमेऽहनि, क्रान्तत्वात् प्रथमे परमे उत्कृष्टे विधर्मणि धारणेन नयन् प्रजाः प्रजायन्त इति प्रजाः देवाः याः भुवनस्य गोपाः भूतानां रक्षिता वृषा सक्ता पवित्रे वा क्षमाय। अधि उपरि सानो समुत्यन्तो अव्ये अविमये। बृहत् सोम वावृधे वर्द्धते स्वानः अद्रिः अदरणः। यद्वा अक्रान् समुद्रः सामर्थ्यात् अत्यक्रमीत् अतीतं गच्छत्युदयादस्तं सदा समुद्रः। आदित्यः प्रथमे प्रकृष्टे व्योमन् सामर्थ्यादन्तरिक्षे प्रजा जनयन् वर्षकर्मणा। भुवनस्य त्रैलोक्यस्य गोपा रक्षिता वृषा वर्षणशीलः। पवित्रे व्याप्तिमये अधिसानः अभिषिच्यमाणः सौम्यैः। वावृधे वर्द्धते बृहदिति बृहद्विशेषणम्। स्वानः सुतः अद्रिरादित्य अदरणः अत्यक्रामत् अधिष्ठितवान्। समुद्रः आत्मा अभिद्रवत् तं भूतानि परमेभ्यः धने भूतेन्द्रियमिश्रशरीरे जनयन् ज्ञानकर्मणा बोध्यमुत्पादयन् प्रजा वर्द्धयन्। भुवनस्य गोप्ता प्रकाशरूपत्वात्। वृषा पवित्रे सत्यमये आत्मा वर्षिता भवति शरीररूपेण पवित्रे ज्ञानमये अवतेर्गत्यर्थः। गत्यर्थाश्च बुद्ध्यर्थाः। अधिसानो सम्बध्यमान-शब्दादिषु महत्त्ववृधे सुष्ठु वर्धितं पवित्रे। प्रवः अद्रिः अदरणः"—इति॥

यास्कस्त्वेवं व्याख्यातवान्—"अत्यक्रमीत् समुद्र आदित्यः परमे व्यवने वर्षकर्मणा जनयन् प्रजा भुवनस्य राजा सर्वस्य राजा। वृषा पवित्रे अधिसानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुरित्यधिदैवतम्। अथाध्यात्ममत्यक्रमीत् समुद्र आत्मा परमे व्यवने ज्ञानकर्मणा जनयन् प्रजाः भुवनस्य राजा सर्वस्य राजा। वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुरित्यात्मगतिमाचष्टे"—इति प० २,१६।

४ ५ १ १ २ १
(सामसामनि द्वे॥) कानो। क्रान्तो२क्रान्तो२। हरिराहज्य-
२ ४ ५ १ २१२
मा२३ना३:। सायिदान्। वाना२वाना२। स्यजठरेपुना२३-
२ ४ ५ १ १ २ १ २
ना३:। द्रभी:। याता२याता२:। कृणुतेनिरिर्णिजा२३-
२ ४ ५ १ १ १ १ २
गा३म्। आता:। माती२म्माती२म्। जनयता२३स्वा२न्धा
५२२ ३ ११११
२३४ओहावा। भो२३४५: ॥ १२ ॥

३ ४ ५ २ २ २२२ २ २ ३ ५
कनिक्रन्तिहा। होयि। हरिराहज्य। मा२३४ना।
२२ १ २ २२१ २ २२ १
हाहोयि। सोदन्वनस्यजठरेपुना२३ना:। हाहोयि। नृभि
२ २ १ २ २ १ २
र्यत:कृणुते निर्णिजा२३ङ्गाम्। हाहोयि। अतोमतायिम्
७ १ ३ ५२ २ ३ १०११
जनयता२३। स्वा२धा२३४औहोवा। भो२३४५: ॥१३॥६४

प्रस्कण्वऋषि:*। "सृज्यमान:" आ समन्ताद्विसृज्यमानोऽभिषूयमाण:† "हरि:" हरितवर्ण: सोम: "कनिक्रन्ति" पुन: पुन: शब्दायते [क्रन्दतेर्यङ्लुकि, तिपि, इडभावे, "दाधर्त्तिदर्धर्त्ती त्यादिना‡ निपातनादभ्यासस्य निगागम:। अभ्यस्तस्वर:¶ ]

---

* "काण्व:"-इति ऋषि-नै०।

† 'सृज्यमान: संसूयमान:'-इति वि०।

‡ "दाधर्त्तिदर्द्धर्तिदर्द्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत् कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रत:सरीसृपतं वरीवृजन्मर्मृज्यागनीगन्तीति च" —इति पा० ७, ४, ६५।

¶ "अभ्यस्तानामादि:"-इति पा० ६, १, १८९।

अथ नवमी।

३ २उ ३ १ २ ३ २ ३ १ ३ २ ३ १ २ ३ १ २
एषस्यतेमधुमाᳬइन्द्रसोमोवृषावृष्ण:परिपवित्रेअक्षाः।
३ १ २ ३ १ २ ३ १ २ ३ २ ३ उ ३क २र
सहस्रदाःशतदाभूरिदावाशश्वत्तमम्बर्हिरावाज्यस्थात्॥८॥६५ *

४ ५ ४ ५ ३ २ ४ ५ र ४र ५
(ऐषम्॥) एषाएषाः। स्यता३१२३४यि। मधुमाᳬइन्द्रसोमः।
र ३ २ ५ ४ ५र र
वृषावृषाइए। वृष्णो३१२३४ः। परिविन्नेअक्षाः। सहस्रा
५ ३ २ ५ ४र ५ ४र ५र ५
ईए। स्रदा३१२३४ः। शतदाभूरिदावा। शश्वत्त्वाईदे।
२ २ र ५र ४ ५ ५ ५
तमा३१२३४म्। बर्हिरावाजिपे। ह्वियाईहाउवा स्था२
१ १ १ १
२३४५त्॥ १४॥ ६५

तथा "पुनानः" पूयमानः "वनस्य" वननीयस्य चास्य द्रोण-कलशस्य "जठरे" "सीदन्" उपविशन् मन्दायते। किञ्च "नृभिः" कर्मनेतृभिर्ऋत्विग्भिः "यतः" संयतः सोमः "गाः" गो-विकारान् क्षीरादीन् आच्छादयन् "निर्णिजं" शुद्धम् आत्मनोरूपं † "कृणुते" ग्रहादिषु करोति। अतोऽस्मै सोमाय "मतिं" मननीयां स्तुतिं "स्वधाभिः" हविर्भिः सह "जनयत" स्तोतारोऽजनयन् [झस्यान्तादेशाभावः छान्दसः। अदादेशः] यद्वा हे स्तोतारः अस्मै सोमाय स्तुतिं जनयत उत्पादयत कुरुतेति यावत्॥ ८॥ ६४

---

* ऋ० ७, ३, २२, ४।

† "निर्णिक्"-इति रूपनामसु प्रथमं नैघण्टुकम् (३, ७)।

अथ दशमी।

१२ ३१२ १२ ३१२ २२३ २ ३२३ १ २
पवस्वसोममधुमाँ ऋतावापोवसानोअधिसानोअव्ये।
३ १ २ ३१२ ३ १ १ ३१२२
अवद्रोणानिघृतवन्ति* रोहमदिन्तमोमत्सरइन्द्र-
१ २
पानः॥ १०॥ ६६†

॥ इति चतुर्थ-दशति ॥ ४ ॥

उशनाऋषिः‡। हे इन्द्र! "वृषाः" वर्षकस्य "ते" तुभ्यं [चतुर्थ्यंथ षष्ठी¶] "एषः" "स्यः§" स सोमः "मधुमान्" माधुर्योपेतः "वृषा" वर्षकः "पवित्रे" "पर्यचाः" पर्यस्रवत् [चरतेर्लुङि रूपम्] स एव "सहस्रदाः" सहस्रसङ्ख्याकस्य धनस्य दाता ,,शतदाः" शतसङ्ख्याकस्य दाता "भूरिदावा"‖ ततोऽपि भूरेर्दाता 'वाजी' बलवान् सोमः "शश्वत्तमम्" अतिशयेन पुराणं "बर्हिः" यज्ञम् "अस्थात्" अधितिष्ठति॥

"वृषा वृषाः"-"वृषा वृष्ण"—इति, "सहस्रसाः"-"शतसाः" इति च साम्नऋचः पाठाः॥ ८॥ ६५

* "घृतवान्ति"—इति ऋ०।

† ऋ० ७, ४, ८, ३।

‡ "काव्यः"—इति ऋषि-नै०।

¶ "षष्ठ्यर्थे चतुर्थीति वाच्यम् (२, ३, ६२)"—इति कात्यायनवचनादित्यर्थः।

§ "स्यश्छन्दसि बहुलम् (पा० ६, १, १३३)"--इतीह मन्त्रे स्य इत्यस्य सोर्लोपः।

‖ "आतोमनिन्क्वनिब्वनिपश्च (पा० ३, २, ७४)"—इति वनिपि रूपम्।

२ ३ ५ ३ २
( माधुच्छन्दसम् ॥ ) हाओ२३४हाइ। इहा३१।
२१ २ १ २ ३४५ २१र
पवस्वसो। मा३मधु। मा२ऋतावा। अपोवसा।
२ १ १३र ४ ५ ११ र २ १
नो३अधि। सानोअव्याइ! अवद्रोणा। नी३घृत।
२ १४ २ २ ३ ५ ३२ २ १
वन्तिरोहा। हाओ२३४हाइ। इहा३१। मदिन्तमो।
२ १ २ २ ४
मत्सरः। आ२४३इ। द्रा३पा५ना६५६ः॥ १५॥ ६६

प्रतर्दनऋषिः*। हे "सोम!" "मधुमान्" [ मत्वर्थीयः ] तादृशस्त्वं "अपः" वसतीवरीः एकधनाः "वसानः" आच्छादयन् "अधि" अधिकं "सानौ" समुच्छ्रिते "अव्ये" अविभवे-पवित्रे "पवस्व" क्षर। ततः "मदिन्तमः" अतिशयेन मदकरः "इन्द्रपानः" इन्द्रेण पातव्यः "मत्सरः" मादयिता सोमः "घृतवन्ति" उदकवतः† "द्रोणानि" द्रोणकलशान् "अवरोह" प्रादुर्भवसि॥

"रोद"-"सीद"—इति पाठौ॥ १०॥ ६६

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य षष्ठः खण्डः॥ ६॥

---

* "दैवोदासिः"—इति ऋषि-नं०।

† "घृतम्"—इत्युदकनामसु दशमं नैघण्टुकम् (१, २)।

अथ सप्तमे खण्डे--

ऐषा प्रथमा ।

१ २ ३ २र ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
प्रसेनानीःशूरो अग्रेरथानाङ्गव्यन्नेति हर्षते अस्य सेना ।
३ २ ३ १ २ ३ १र २र ३ २उ ३ १ २ ३ १ २
भद्रान्कृण्वन्निन्द्र हवांत्सखिभ्य आसोमो वस्त्रारभसानि-

दत्ते ॥ १ ॥ ६७*

३ ५ ३ ५
(कुत्सस्याधिरथीयानि त्रीणि ॥) हो४वा । उऊवा
४ ५ २ १र २र १ र र २ २ ३ ४
३ । होवा । प्रसेनानाइः । शूरोआ३ । अग्राइरथा
५ २ १ २र १ २ २ ३ ४ ५ २ १र
नाम् । गव्यन्नेताइ । हर्षंता३इ । अस्यसेना । भद्रा
१ १ २ २ ३ ४ ५ २र १र २र १
न्कृण्वान् । इन्द्रहा३ । वांत्सखिभ्याः । आसोमोवा ।
२ १ २र ३ ४ ५ ३ ५ ३ २ ४
स्त्राइरभ । सानिदत्ताइ । हो४वा । उऊवा२ । हो
५ ५
वा६ । हाउवा ॥ १६ ॥

५र ४ २ १११ २ १र २र १ र र २ २
औहो३वा३४५ । प्रसेनानाइः । शूरोआ३ । अग्राइ
१४ ५ २ १ २र १ २ १ ३ ४ ५
रथानाम् । गव्यन्नेताइ । हर्षंता३इ । अस्यसेना ।
२ १र २ १ २ २ ३ ४ ५ र ४
भद्रान्कृण्वान् । इन्द्रहा३ । वांत्सखिभ्याः । औहो३

---

* ऋ० ७, ४, ६, १ ।

२ १११　२र १र २र १　२ १　२　२
वा३४५ । आसोमोवा । स्वा३रभ । सा३४३ । नौ३
४
दा५त्ता६५६इ ॥ १७ ॥

५र४ २ १११　३र३र१　रर २　२
औहो३वा३४५ । प्रसेनानाइः । शूरोआ३ । ग्राइ
३४ ५　३ २र१　२　२ ३ ४ ५
रथानाम् । गव्यन्नेताइ । हर्षता३इ । अस्यसेना ।
३र २ १　१　२ ३४ ५　र४ २
भद्रान्कृण्वान् । इन्द्रह्वा३ । वांत्सखिभ्याः । औहो३वा
१११　३र र २र १　२ १　२　२ ४
३४५ । आसोमोवा । स्वा३रभ । सा३४३ । नौ३दा५ ।
२ १ १ १
ता२३४५इ ॥ १८ ॥ ६७

प्रतर्दनऋषिः* । "सेनानीः" सेनाना मग्रे नेता । "शूरः" शत्रूणां बाधकः "सोमः" "गव्यन्"† इच्छन् यजमानानां पश्वादिक मिच्छन् "रथानाम्" "अग्रे" पुरतः "प्रैति" प्रकर्षेण सङ्ग्राम मङ्गच्छति । "अस्य" सोमस्य "सेना" च "हर्षते" हृष्यति [वाक्यभेदादनिघातः] किञ्च "सखिभ्यः" समानख्यानेभ्यो यजमानेभ्यः "इन्द्रह्वान्" तैः कृतानि इन्द्रस्य आह्वानानि "भद्रान्" कल्याणानि यथार्थानि "कृण्वन्" । आहूतो हीन्द्रः सोमं पीत्वा

* "दैवोदासिः"—इति ऋषि-क्रि० ।

† "छन्दसि परेच्छायां मपि क्यज् वक्तव्यः"—इति तृतीयाध्यायीय-कात्यायन-वचनादिह क्यचि रूपम् ।

अथ द्वितीया।

२ ३ १ ३ १ २   २   २ ३ २ ३ २ ३ १र   २र
प्रते धारामधुमतीरसृग्रन्वारंयत्पूतोअत्येष्यव्यम्।
१ २   ३ १ २ ३ १ २ १   २   ३ २ ३   १ २   ३ २
पवमानपवसेधामगोनाञ्जनयत्सूर्यमपिन्वोअर्कैः ॥२॥६८*

२र   र   २
(वैयश्वज्योतिषाणि त्रीणि ॥) हाउहोवा३हाइ।
र र र   १ ७   १ १ १ १   २र   र   २
प्रते धारामधुमा३ताइरसृग्रा२३४५न्। हाउहोवा३हाइ।
र   र र   १   ७   १ १ १ १   २र   र
वारंयत्पूतोअतौ३याइषिआव्या२३४५म्। हाउहोवा३
२   र   ५र १ ७   १ १ १ १   २र   र
हाइ। पवमानपवसे३धामगोना२३४५म्। हाउहोवा

कामान् प्रयच्छतीति। "रभसानि" इन्द्रस्य वेगेनागमन-निमित्तानि "वस्त्रा" वस्त्राण्याच्छादकानि पयःप्रभृतीन्याश्रयणानि "आ दत्ते" आ गृह्णाति † ॥ १ ॥ ६७

* ऋ० ७, ४, १७, १।

† अत्र विवरणं यथा—"प्रसेनानी। सेनां नयति इति सेनानीः। शूरः विक्रान्तः। अग्रे रथानां ये देवरथाः गव्यम् इच्छन्। धन पृथिव्यां भवं प्रेति प्रयाति। हर्षति अस्य सेना भद्रान् भन्दनीयानि। कुर्वन् क्षणम्। इन्द्रहवान् इन्द्रियाणि। सखिभ्यः ऋत्विग्भ्यः। एवं गुणविशिष्टः। सोमः वस्त्राणि रभसानि पतन्ति। आदत्ते परसैन्येभ्यः। अथवा सेनानीः स्कन्दः शूरः विक्रान्तः। अग्रे पुरतः देवरथानां गव्यम्। पृथिव्यां भवन्धनम्। दाति गृह्णाति ददाति सैन्येभ्यः सोमइव रभसान् वस्त्राणि सैन्येभ्यो ददाति॥"—इति॥

अथ तृतीया ।

१ २ ३क २र ३ १र २र ३ १र २र
प्रगायताभ्यर्चामदेवान्त्सोमꣳहिनोतमहतेधनाय ।
३ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २र
स्वादुःपवतामतिवारमव्यमासीदतुकलशन्देवइन्दुः॥३॥६८*

२ २ १ ७र १ १ १ १ २र
इहाइ । जनयंत्सूर्यमा३पाइन्वोअर्का३३४५इः । हाउ
२ २ १ १ १ १
होवा३हाउ । वा३४५ ॥ १८ ॥ ६८

पराशरऋषिः† । तदा प्रसृज्यन्ते "यद्" यदा "पूतः" वसतीवरीभिस्त्वं "अव्यम्" अविभवं "वारं" वालं पवित्रम् "अत्येषि" अतीत्य गच्छसि । किञ्च हे "पवमान" शोध्यमान सोम! "गोनां‡" गवां¶ "धाम" धीयते पीयत इति धाम पयः तत् वसनीकृत्य "पवसे" चरसि । ततः "जनयन्" जायमानस्त्वं "अर्कः" अर्चनीयैः स्व-तेजोभिः "सूर्यम्" आदित्यम् "अपिन्वः" पूरयसि ॥

"वारं यत्पूतोअत्येष्यव्यम्"–"वारान्यत्पूतो अत्येष्यव्यान्"—इति, "जनयन्"–"जज्ञानः"—इति च साम्नऋचः पाठौ ॥ २ ॥ ६८

---

* ऋ० ७, ४, ११, ४ ।

† "शाक्त्यः"—इति ऋषि-नै० ।

‡ "गोः पादान्ते (७, १, ५७)"—इति चित्रं गोनामिति ।

¶ 'गवां रश्मीनां मदकानां वा'—इति वि० ।

२ १र २ १ १ २ ३ ४ ५ २र १

प्रगायता। अभिय। चामदेवान्। सोमᳲ-

२ १ २ ३ ४ ५ २र १ २

हिनो। ता३मह। तेधनाया। स्वादुःपवा। ता३

१ २ ३ ४ ५ २र १र २ १ २

मति। वारमव्याम्। आसीदतु। कलशम्। दा-

२ ४

३४३इ। वा३आ५इन्दू६५६ः॥ २०॥ ६९

इन्द्रप्रमतिर्वासिष्ठऋषिः। हे स्तोतारः! "प्रगायत" 'सोमं' प्रकर्षेणाभिष्टुत। वयन्तु "देवान्" "अभ्यर्चामः" अभिष्टुमः*। यद्वा। देवानभ्यर्चामोऽभ्यर्चत [ पुरुष-व्यत्ययः]। किञ्च। "महते" महत् प्रभूतं धनाय धनं प्राप्तुं सोमं "हिनोत"† अभिषवार्थं प्रेरयत [ क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः (२,३,१४,)-इति धन-शब्दस्य चतुर्थी ] ततः "स्वादुः" मधुरः सोमः "अव्यम्" अविमयं "वारं" वालं पवित्रम् "अतिपवताम्" अतीत्य क्षरतु। "देवः" द्योतमानः। सोमः "इन्दुः" दीप्तः सन् "कलशं" द्रोणम् "अति आसीदतु" आभिमुख्येन तिष्ठतु॥

"पवतां"-"पवाते"—इति, "देवइन्दुः"-"देवयुर्न"—इति साम्नऋचः पाठौ॥ ३॥ ६९

---

* 'स्तोवरमेव'—इति वि०।

† "तप्तनप्तनथनाश्च (७, १, ४५ पा०)"—इति तपि सिद्धं हिनोतेति।

अथ चतुर्थी ।

१ २ ३ १ २ ३१र २र३ २ ३ १र २र ३ १ २
प्रहिन्वानोजनितारोदस्योरथोनवाजꣳसनिषन्नयासीत् ।
३ १ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १
इन्द्रङ्गच्छन्नायुधासꣳशिशानोविश्वावसुर्हस्तयोरादधानः ॥ ४ ॥७०*

२र र २ र र र १ ३र ५र
हाउहोवा३हाइ । प्रहिन्वानोजनितारो३४३दसीयोः ।
२र र २ र र २ ३र ५र
हाउहोवा३हाइ । रथोनवाजꣳसनिषा३४३नयासीत् ।
२र र २ र र २ ३र ५
हाउहोवा३हाइ । इन्द्रङ्गच्छन्नायुधासा३४३ꣳशिशानः ।
२र र २ र र २ ३र ५ ४
हाउहोवा३हाइ । विश्वावसुर्हस्तयोरा३४३दधानः । दधा
पूनाउ । वा ॥ २१ ॥ ७०

वसिष्ठ ऋषिः† । "प्रहिन्वानः" अध्वर्युभिः प्रेर्यमाणः‡ "जनिता"¶ उत्पादयिता "रोदस्योः" द्यावापृथिव्योः§ तयोर्जनयितृत्वं वृष्टिप्रदान-हविः-प्रापणाभ्याम् । तादृक सोमो "वाजम्" अन्नं "सनिष्यन्" दास्यन्॥ "प्रायासीत्" प्रगच्छति ।

* ऋ० ७, ३, २९, १ ।　　† "मित्रावरुणः"—इति ऋषि-नि० ।

‡ 'प्रीणानः गच्छन् वा'—इति वि० ।

¶ "जनिता मन्त्रे ( ६,४,५३ )"—इति पा० ।

§ "रोदसी"—इति द्यावापृथिवीनामसु चतुर्थं नैघण्टुकम् ( ३, ३० )।

॥ 'सनिष्यन् सम्भजमानः'—इति वि० ।

अथ पञ्चमी।

२ २ ३ १२३१२३ १र २र३ १ २ ३ १र २र
तत्त्वद्यदीमनसोविनतोवागज्येष्ठस्यधर्मन्द्युक्षोरनीके।
१ २ ३२३१ २ ३ २उ ३१२ ३१२ २ ३१ २
आदीमायन्वरमावावशानाजुष्टम्पतिङ्कलशगावइन्दुम्॥७१

(वाचःसामनी द्वे)॥ तत्त्वद्यदी। ३ ४ ५र हो२३४५इ। २ १ १ १ १ २ ४ मन-
र २र४ ५ ३ १ १ १ १ २र ४ ५ ३ १ १ १ १
सोविनतः। वा२३४५क्। ज्येष्ठस्यधा। हो२३४५।
४ २र ४ ५र ३ १ १ १ १ २र ४र ५र ३ १ १ १ १
मन्द्युक्षोरनी। का२३४५इ। आदीमायन्। हो२३४५इ।
२ ४ २र ४र ५ र ३ १ १ १ १ ३ ४ ५ ३ १ १ १ १
वरमावावशा। ना२३४५ः। जुष्टम्पतिम्। हो२३३५इ।
४ र
कलशेगा५वः। इ। दाउ। वा॥ २२॥
२ १ २ ३ ४ र ३र ४ ५ २ १ १ १ १
तत्त्वद्यदा३१२३४इ। मनसोविनतः। वा२३४५क्।
२र १ २ ३र ४ ५र ३ १ १ १ १ २र १
ज्येष्ठस्यधा३१२३४। मन्द्युक्षोरनी। का२३४५इ। आदा-

"इन्द्रङ्गच्छन्" प्राप्नुवन् "आयुधा" "आयुधानि" "संशिशानः" सम्यक् तीक्ष्णीकुर्व्वन् इन्द्रं सहायगमनार्थं तीक्ष्णायुधः सन् "विश्वा"† सर्व्वाणि "वसु"‡ वसूनि धनानि "हस्तयोरादधानः" अस्मभ्यन्दानाय एवं कुर्व्वन् प्रायासीत्॥ ४॥ ७०

* ऋ० ७, ४, १५, २।

†, ‡ 'विश्वा'—इति सुप आत्वे, 'वसु'—इति सुपो लुकि च रूपम् (७, १, ३९)।

२　　　　३ ४ ३र ४र ५ र　　ञ १ १ १ १　　२ १
इमायाऽ३१२३४न् । वरमावावशा । नार२३४५ः । जुष्ट-

२　　　　र
म्यताऽ३१२३४इम् । कलशेगा५वः । इ । दाउ । वा ।

॥ २३ ॥ ७१

मृडीको वासिष्ठऋषिः । "वेनतः" [ वैनो वेनतेः कान्ति-कर्म्मणः ( दै, ४, ३८ )"—इति यास्कः ] कामयमानस्य "मनसः" [ मनो मन्यतेः स्तुतिकर्म्मणः* ] स्तोतुः "वाक्" स्तुतिलक्षणा† यद्येनं "तक्षत्" संस्करोति‡ । "धर्म्मन्" धारके¶ यज्ञे "ज्येष्ठस्य" प्रशस्यस्य "द्युक्षोः" दीप्त-स्तुतिकस्य [ दृक्ष् शब्दे(अ० प०) इत्यस्मात् कु-प्रत्ययः ] सवनस्य "अनीके" प्रमुखे यदा यज्ञेषु सवन-मुखे स्तोतुर्वाक् सोमं स्तौतीत्यर्थः । "आ" अनन्तरमेव "वरं" वरणीयं "जुष्टं" देवानां मदाय पर्याप्तं "पतिं" सर्वस्य पालकं "कलशे" स्थितं "इन्दुम्" "ईम्" एनं सोमं "वावशानाः" कामयमानाः "गावः" "आयन्" पयसा क्षीरेण मिश्रयितु मागच्छन्ति ।

"धर्म्मन्"-"धर्म्मणि"—इति पाठौ ॥ ५ ॥ ७१

---

* "मन्यते"—इति स्तुति-कर्मसु अष्टविंशमेकं पठितकम् ( ३, १४ ) ।

† 'वाक सखित्वम्'—इति वि० ।

‡ 'तक्षत् करोति'—इत्येव वि० ।

¶ धारणार्थ-धृ-धातोः कर्त्तरि मनिपि धर्म्मन्निति तस्माच्छान्दस-लुकि रूपम् ।

अथ षष्ठी ।

३ १२ ३१२ ३२३१२ ३२३ १२
साकमुक्षोमर्जयन्तस्वसारोदशधीरस्यधीतयोधनुत्रीः ।
३१२ ३१२ १२३१२ ३२३२३२
हरिःपर्यद्रवज्जाःसूर्यस्यद्रोणंननक्षेअत्योनवाजी ॥ ६॥७२*

४ ५ १२ २१
(दाशस्पत्ये द्वे ॥) साकाम् । उक्षोमर्जयन्त । स्वसा
२ १ १२ २२१ २ १
२३राः । दाशा२ । धीरस्यधीतयोधनू२३त्रीः । हारी
१ २ ० २ १ १
२ः । पर्यद्रवज्जाःहरियार२३स्या । द्रोणा२म् । नन-
२ २ २ १११११
क्षेअत्योनवा२३ । हाउवा२ । जी२३४५ ॥ २४ ॥

५२ ५ २ ५ ५ ५२
साकमुक्षाइए । ए३१२३४ । मर्ज्जयन्तस्वसारः ।
२ ५ २ ५२४ ५२ ४ ५ ४ ५
दशधीराइए । ए३१२३४ । स्यधीतयोधनुत्रीः । हरिः
५ २ ५ ४२ २५ २ ५
पर्याइए । ए३१२३४ । द्रवज्जाःसूर्यस्य । द्रोणन्ननाइए ।
२ २ ५२ ४ ५ ५ ३ १११११
ए३१२३४ । क्षेअत्योनवाई । हाउवा । जी२३४५ ॥२५॥ ७२

* उ० ६,२,१५,१=ऋ० ७,४,३,१=जरो ८,१,७–१२,१,६–१८,२,४ ।

अथ सप्तमी ।

३ १ २　३　१२ ३२ ३ १ २ ३ २ ३ २ ३१र २र
अधियदस्मिन्वाजिनीवशुभस्पर्द्धन्तेधियःसूरेनविशः ।
३ १ २ ३　१ २　३ १ २　३ १र २र३ १ २　३ १ २
अपोवृणानःपवतेकवीयान्व्रजन्नपशुवर्द्धनायमन्म ॥ ७ ॥७३*

नोधाऋषिः†। "साकमुक्षः" [ उक्ष सेचने ( भ्वा० प० ) क्विपि रूपम् ] तादृश्यः "स्वसारः" कर्म्म-करणार्थं मितस्ततः सुष्ठु गच्छन्त्यः‡ अङ्गुलयः¶ "मर्जयन्त" सोमं शोधयन्ति [ मृज् शौचालङ्कारयोः ( चु० उभ० ] ताः दशसङ्ख्याकाः "धीतयः" [ अङ्गुलिनामैतत् ( नै० २, ५, ७ ] अङ्गुलयः "धीरस्य" समर्थस्य प्राज्ञस्य वा देवैर्ध्यातव्यस्य काम्यमानस्य वा सोमस्य "धनुत्रीः" प्रेरयित्र्यो भवन्ति§। ततः "हरिः" हरितवर्णः सोमः "सूर्य्यस्य" "जाः" प्रादुर्भूता जाया दिशस्ताः‖ "पर्य्यद्रवत्" परितो गच्छति । सूर्य्यस्य तेजसा हि आविर्भवतीति दिशां तस्य जायात्वम् । "अत्यः" अतनशीलः "वाजी न" अश्व इव स्थितः सोमः "द्रोणं" कलशं "ननक्षे" व्याप्नोति [नक्षति-व्याप्ति-कर्मा (नै० २, १८, २) ॥ ६ ॥ ७२

---

* ऋ० ७, ४, ४, २ ।

† "गौतमः"—इति ऋषि नै० ।

‡ सृ शब्दोपतापयोः ( भ्वा० प० )—इत्यस्य रूपं स्वसेत्यभिप्रायः ।

¶ "स्वसारः"—इत्यङ्गुलि-नामसु त्रयोदशतमं नैघण्टुकम् ।

§ "तायन्ति"—इति वि० ।

‖ "अपत्यम्"—इति वि० । "जाः"—इत्यपत्यनामसु नवमं नैघण्टुकम् २, २ ।

४ ५ ४ २ ३र २
( कश्यपस्य च शोभनम् ॥ ) अधियदा। स्माइन्वाऽरजि

३र १ २ ३ १ २ १ २ ४ ५
नीऽरवशु। भाः। स्पर्द्धन्तेधियःह्व। राइनविश्राः।

२ १र र ७ १ १
अपोवृणानःपवताइ। कवीऽ२यान्। व्रजन्न। पा।

२ १ २ २ ४
शुवद्धं। ना३४३। या३मा५न्माई५ई ॥ २६ ॥ ७३

कण्व ऋषिः*। "यद्" यदा "अस्मिन्" सोमे "वाजिनीव शुभः"† अश्वे यथा वस्त्रप्रभृत्यलङ्कारा भवन्ति। यदा वास्मिन् सोमे "सूरे न" सूर्ये न यथा सूर्ये "विश्रः" रश्मयः उदिता भवन्ति तदा "धियः" अङ्गुलयः "अधिस्पर्द्धन्ते" अहं पुरस्ताच्छोधयाम्यहं पुरतः शोधयामीत्यहमिकया उपतिष्ठते। ततोऽयं सोमः "अपः" वसतीवरीः "वृणानः" आच्छादयन् "पवते" पात्रेषु चरति कलशानभिगच्छति। कीदृशः? "कवीयान्" कविरिवाचरन्। यद्वा। कवयः स्तोतारः तानिच्छन्। तत्र दृष्टान्तः—"व्रजं न" "मन्म" मननीयं बोद्धव्यं रक्षितव्यं गवां गोष्ठं पशुवर्द्धनाय गोपालः परिगच्छति यथा तथा देवानां प्रीणनाय पात्राणि पवते॥

"सूर्ये"-"सूरे"—इति, "कवीयान्"—"कवीयन्"—इति च साम्न ऋचः पाठः॥ ७॥ ७३

---

* "घोरः"—इति ऋषि० नै०।

† शुभइति शुभ शोभायाम् (भ्वा०आ०)—इत्यस्य रूपम्। विसर्गस्तु न दृश्यते मूले।

अथाष्टमी।

१ १ ३ १ २ ३ १ २ ३ २ ३ २ ३ ३ १ २ ३ १ २ ३ १ २
इन्दु र्वाजीपवतेगोन्योघाइन्द्रेसोमः सहइन्वन्मदाय।
३ २ ३ १ २ ३ १र २र ३
हन्तिरक्षोबाधतेपर्यरातिं
१ २ ३ २ ३ १ २ ३ १ २
व*रिवस्कृ†ण्वन्वृजनस्यराजा॥८॥७४‡

२ १ १ २र
(दाशस्पत्यानि चत्वारि॥) इन्दूरवाजी२। पवतेगो

२ १ ५ १ २
नियोघाः। इन्द्राइसो२३४माः। साहइन्वन्मदाया।

१ ५ १र र २ १ २
हन्ताइरा२३४क्षाः। बाधतेपर्यरातिम्। वराइवा२३४स्कृ।

२ १ १ ऽ २ २ ५ ४
ण्वन्वृजाना२३स्या। रा३जौवाओ२३४वा। हो५इ।

डा॥२७॥

४ ५ र ४र ५ र ४र ५ १ ० २
इन्दुर्वाजीपवतौ। हौहोवाहाइ। गोनियौघौ।

३ ५ १ ऽर १र ऽर १ २ १ २
वांओ२३४वा। इन्द्र२सोमा२ः सहइ। न्वान्मदायौ। वां-

३ ५ १ २ १ २र १र २ र १ ७ २ ३
ओ२३४वा। हन्तिरक्षोबाधते। पार्यरातौ। वांओ-

---

* "अरातीर्व"—इति, † "वरिवःकृ"—इति च क०।

‡ उ०३,२,२०,१ = ऋ०७,४,११,५ = अथे ३,१,१५—८,२,५।

५ १ २ १ २ १ ऽ २
२३४वा। वरिवस्कृण्वन्च् जना३। स्या। रा३जौवा-

५ ४
ओ२३४वा। हो५इ। डा॥ २८॥

५ २२ २ २ ४ ५ २२ २
इन्दुरौहोवाहाईयावाजाउ। वा३। हाउवा।

२२ १ २ २ १ २
पवतेगोनियोघाउ। वा३। हाउवा। इन्द्राइसोमः।

१ २ २ १ ३ ५२ २
सहइन्वाउ। वा३। हाउवा३। मा२दा२३४औहोवा।

३ १ १ १ १ २ १ २ २ १ २
या२४५। हन्ताइरहो। बाधानाइपाउ। वा३।

२ १ ३ ५२ २ ३ १ १ १ १ २ ३
हाउवा३। यो२रा२३४औहोवा। ती२३४५म्। वरा-

२ १ २ २ १
इवस्कृ। एवन्च् जनाउ। वा३। हाउवा३। स्या२-

३ ५२ २ ३ १ ५ १ १
रा२३४औहोवा। जा२३४५॥ २९॥

५ २२ २२ ४ ५ ए २
इन्दर्वाजीपवतेगोनियोघाः। इन्द्रे सोमःसहइन्वन्म-

४ ५ ३२ २ २ ४ ५
दाया। हन्तिरक्षोबाधतेपर्यरातीम्। वरिवस्कृण्वन्च् ज-

४ ५    ३र २    ५र र    २    २ १र ३ १ १ १ २
नस्यराजा। राजा३४औहोवा। ए३। स्वराजार३४५

॥ ३० ॥ ७४

॥ इति ग्रामे गेये पञ्चदशः प्रपाठकः ॥

मन्युर्वासिष्ठ ऋषिः। "इन्दुः" चरणशीलः* "वाजी" बलवान् "गोन्योघाः" गमनशील-नीचीनाग्र-रससङ्घातः† "इन्द्रे" "सहः" बलकरं रसम् "इन्वन्" प्रेरयन्‡ "सोमः" "मदाय" तस्य मदार्थं "पवते" चरति। किञ्च। "रक्षः" रक्षःकुलं "हन्ति" हिनस्ति। किञ्च। "अरातीः" अरातीन्¶ शत्रून् "परिबाधते" परितः संहरति। कीदृशः? "वरिवः" वरणीयं धनं "कृण्वन्" स्तोतॄणां कुर्वन् "वृजनस्य" बलस्य§ "राजा" ईश्वरः|| सोम इति ॥ ८ ॥ ७४

---

* अतएव "इन्दुः"—इति उदकनामसु दृश्यते च (नै०१,१२,८३) "उन्द ेर आदेः—(उ,१)"—इत्युनत्तेरिन्दुरिति।

† गो—गमनशीलः, नी—नीचिनः, (तस्य अग्रे विद्यमानः) ओघः—रससङ्घातः। "गोनी"-शब्दो गमनशीलार्थेऽपभ्रंश इत्युदाजहार च पस्पशे पतञ्जलिः।

‡ "इन्वति"—इति गतिकर्मसु पञ्चदशाधिकशततं नैघण्टुकम् २,१४।

¶ भाष्यकारस्त्वत्र ऋग्वेदीयपाठमनुसृत्य व्याचख्यौ, सामवेदीयपाठस्तु "अरातिम्"—इति।

§ "वृजनम्"—इति बलनामसु एकविंशतितमं नैघण्टुकम् २,९।

|| "राजति"—इति ऐश्वर्यकर्मसु चतुर्थं नैघण्टुकम् २,२१।

अथ नवमी।

१ २ ३ १ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
अयापवापवस्वैनावसूनिमांश्चत्वइन्दोसरसिप्रधन्व।

३ २ ३ २ ३ २ ३ २ ३ १
ब्रध्नश्चिद्यस्यवातोनजूति

२ ३ १ २ ३ १ २ ३ १ २
म्पुरुमेधाश्चि*त्तकवेनरन्धात्॥ ९॥ ७५†

५र ४ ५ ४ ५
(औष्टानि त्रीणि॥) औहोहाइ। अयोहाइ।

१ र र र २ १ २ ५ २ १ २ ५ २
पवापवस्वैनावसू२३नी। औ२होइ। इहा। ई२या।

र १ र २ १ २ ५ २ २ २
मांश्चत्वइन्दोसरसिप्रधा२३न्वा। औ२होइ। इहा।

५ २ १ र र २ १ २ ५ २ १ २
ई२या। ब्रध्नश्चिद्यस्यवातोनजू२३तीम्। औ३होइ। इहा।

५ २ १र र र२१ २ ५ २
ई३या। पुरुमेधाश्चित्तकवेनरा२३न्धात्। औ२होइ।

१ २ ५ ३ ५र र २ २र३ २
इहा। ई२। या२३४। औहोवा। ए३। दोदिवौ१॥

॥१॥

५ ४ ५ ४ ५ १ र र२१ २ र
अयोहाइ। पवोहाइ। पवस्वैनावसू२३नी। इहो

---

* "पुरुमेधश्चि"—इति च्छ०।

† उ०४,१,२१,१ = ऋ०७,४,२१,२ = ऊहे ६,२,१७—८,२,१०—१३,२,१।

इया३। ई३या। मा३ऽस्वत्वइन्दोसरसिप्रधा२३न्वा। इ
होइया३। ई३या। अध्रश्चिद्यस्यवातोनजू२३तीम्।
इहोइया३। ई३या। पुरुमेधाश्चित्तकवेनरा२३न्धात्।
इहोइया३। ई२। या२३४। औहोवा। ए३। हो
इया२३४५त्॥ २॥

हाओ२३४वा। २। हा३ओ२३४वा। हाउवा। अया-
पवापवस्वैनावसूनि। इहइ। हिया२। इहा। इहा।
मा३ऽस्वत्वइन्दोसरसिप्रधन्व। इहइ। हिया२। इहा।
इहा। अध्रश्चिद्यस्यवातोनजूतिम्। इहइ। हिया२।
इहा। इहा३। हाओ२३४वा। २। हा३ओ२३४वा।
हाउवा। पुरुमेधाश्चित्तकवेनरन्धात्। इहइ। हिया
२। इहा। इहा२३४५॥ ३॥ ७५

कुत्सऋषिः* । हे सोम ! "अया" अनया "पवा" पवमानया धारया सह "एना" एनानि "वसूनि" धनानि "पवस्व" चर [पवा—पूञ् पवने (क्र्या० उ०) "अन्येभ्योपि दृश्यन्ते (३,२,१०१)"—इति विन् प्रत्ययः । आर्धधातुकलक्षणो गुणः । "सावेकाचः (६,१,१६८)"—इति तृतीयाया उदात्तत्वम्]। तथा हे "इन्दो"! त्वं "मांश्चत्वे" मन्यमानानां चातके "सरसि" उदके† वसतीवर्य्याख्ये कलशे "प्रधन्व" प्रगच्छ‡। ततः "यस्य" यं "ब्रध्न-श्चित्" सर्वेषां प्रज्ञापकः मूलभूतो वा आदित्यः¶ "वातो न" वात इव "जूतिं" वेगं§ कुर्वन्। किञ्च। "पुरुमेधाश्चित्" बहुविधप्रज्ञ इन्द्रश्च "तकवे" [तकतिर्गतिकर्म्मसु पठितः‖। अस्मादौणादिक उन् प्रत्ययः यस्येति (२,३,३७) कर्मणि षष्ठी ॥ "न लोकाव्ययेति (२, ३, ६९) षष्ठी-प्रतिषेधश्छान्दसः] सोम मभि गच्छता मित्यर्थः ॥

"यस्य"-"यत्र"—इति, "जूतिं"—"जूतः"-इति,—"नरस्यात्"-"नरन्दात्"—इति च साम्न ऋचः क्रमेण पाठाः ॥ ६ ॥ ७५

---

* "आङ्गिरसः"—इति ऋषि-नै० ।

† "सरः"—इत्युदकनामस्वष्टत्रिंशत्पदम् नै०१,१२ ।

‡ "धन्वति"—इति गतिकर्मसु चतुःषष्टितमं नैघण्टुकम २,१४ ।

¶ 'ब्रध्नः ब्रह्म, सविता वा महान् वा'—इति वि० ।

§ जवतेर्वेगकर्मण ऊतिजूतीत्यादिना (३,३,९७) निपातनात् जूतिरिति ।

‖ नि० नै० २,१४,६८ ।

अथ दशमी ।

३ १र   २र   ३ १ २ २ ३ १र   २र   ३ २
महत्तत्सोमोमहिषश्चकारापांयद्गर्भोवृणीतदेवान् ।

१ २ ३ २ ३ १ २   ३ १र
अदधादिन्द्रे पवमानओजो

२र ३ २ ३ २   ३ १ २
जनयत्सूर्येज्योतिरिन्दुः ॥ १० ॥ ७६*

२ २ २   १   २
(आत्म ॥) महत्तत्सोमोमहिषश्चा३कारा२ । अपां

२ २ १   २ २ २ १
यद्गर्भोवृणीता३दा३इवा२न् । अदधादिन्द्रे पवमाना३ओ

२ ऽर १   २   २
जा२ः । अजनयत्सूर्ये३ज्यो२३ । तिरिन्द्राउवा३ । ए३ ।

१ २ १र २र १र २ १   १ १ १ १
अजनयत्सूर्येज्योतिरि । दू२३४५ः ॥ ४ ॥ ७६

"पराशरऋषिः†। "महिषः" महान्‡ पूज्यो वा "सोमः" "महत्" प्रभूतं¶ "तत्" कर्म "चकार" अकरोत् । किं तत् ?

---

* उ० ५,२,१,२ = ऋ० ७,४,१९,१ = ऊहे १७,२,१—२३,२,५—२२,२,८—२२,२,९ = ऊह्ये ६, २,५ ।

† "शाक्तः"—इति ऋषि-नै० ।

‡ अत्राह यास्कः—'महत्तत्सोमोमहिषश्चकारापां यद्गर्भोऽवृणीत देवानाधिपत्य मदधादिन्द्रे पवमान ओजो ऽजनयत् सूर्ये ज्योतिरिन्दुरादित्य इन्दुरात्मा'—इति नि०प०२,१७ ।

¶ 'महत् असम्भाव्यम्'—इति वि० ।

अथैकादशी।

१ २ ३ २ ३ २ ३ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २

असर्जिवक्कारथ्येयथाजौधियामनोताप्रथमामनीषा।

२ १ २ ३ २ ३ २ ३

दशखसारोअधिसानोऽ

१ २ ३ २ ३ १ ३ १ २ ३ १ २

अव्येऽज्जन्ति*वङ्गिंसदनेष्वच्छ॥ ११ ॥ ७७ †

"अपाङ्गर्भः" उदकानां गर्भभूतः‡ जनयितृत्वाज्जन्यत्वाद्वा। स सोमः "देवान्¶" "अवृणीत"§ समभजतेति "यत्" तत् कृतवानिति। किञ्च। "पवमानः" पूयमानः‖ सोमः "ओजः"+ सोमपानजन्यं बलम् "इन्द्रे"÷ "अदधात्" न्यधात् तथा "इन्दुः" सोमः × "सूर्ये"** "ज्योतिः" तेजः†† अजनयत्‡‡॥ १० ॥ ७६

---

* "अव्येऽअञ्जन्ति"—इति ऋ०।

† ऋ० ७,४,१,१=आरण्ये १,२,२२।

‡ 'अपां यद् गर्भदर्शनमात्रं पञ्चानां भूतानां गर्भः'—इति वि०।

¶ 'इन्द्रियाणि'—इति वि०।

§ 'अवृणीत अधिष्ठितवान्'—इति वि०।

‖ 'पूयमानः विषयप्रमाणेन'—इति वि०।

+ 'ओजः बलं मणिमादि'—इति वि०।

÷ 'इन्द्रे आत्मनि'—इति वि०।

× 'ज्योतिरिन्दुरादित्यः अध्यात्मम्'—इति वि०।

** 'सूर्ये सरणशीले'—इति वि०।

†† 'तेजः इन्द्रः'—इति वि०।

‡‡ 'तथाचोक्तः—येन सूर्यस्तपति'—इति वि०।

२ १ २ २ २ १
(वासिष्ठम् ॥) असाऔ३हो। जिवाका२। रथ्या
२ ५र ३ १ १ १ १ २ १ २ २ १
इया३४। था। जार२३४५उ। धियाऔ३हो। मनो-
१ २ ५र ३ १ १ १ १ २ १ २ २
ता२। प्रथमामा३४। नौ। षा२३४५। दशाऔ३हो।
१ १ २ ५ ३ १ १ १ १ १ १
स्वसारा२ः। अधिसानो३४। अ। व्या२३४५इ। मृजा
२ २ १ १ ५ ५
औ३हो। तिवाक्षौ२म्। सदनाइषू३४। अश्वा२उ।
१ १ १
वा३४५॥ ५॥ ७७

काश्यपऋषिः*। "वक्वा" शब्दायमानः [वच परिभाषणे (अदा०प०) वनिप्] तादृशः पवमानः सोमः "आजौ" अजन्ति कर्माणि ऋत्विज इति आजिर्यज्ञः तस्मिन् "धिया" कर्मणा स्तोत्रेण या† साकम् "असर्जि" पात्रेषु सृज्यते‡। तत्र दृष्टान्तः। "रथ्ये यथा" रथ्ये रथार्हे [आजौ सङ्ग्रामनामैतत्¶। अजन्ति प्रक्षिपन्त्यायुधान्यत्रेति तस्मिन्] अश्वो यथा सृज्यते तद्वत्। कीदृशः? "मनोता" यस्यां देवानां मनांसि प्रोतानि सा [तथाच ब्राह्मणम्—"तस्यां हि तेषां मनांस्योतानि"—इति] "प्रथमा"

* "मारीचः"—इति ऋषि-नै०।

† 'धिया प्रज्ञया कर्मणा वा'—इति वि०।

‡ 'सृष्टवाम्'—इति वि०।

¶ नि० नै० २,१७,८।

अथ द्वादशी।

३२ ३२३१२ ३१२ ३ १२३१२ ३२३१२
अपामिवेदूर्मयस्तर्तुराणाःप्रमनीषाईरतेसोममच्छ।
३ २३ १ २३२ ३१२
नमस्यन्तीरुपचयन्तिसञ्चा
२२ ३२३१२
चविशन्त्युशतीरुशन्तम्॥१२॥ ७८*

॥ पञ्चमदशति॥ ॥ अर्द्धः प्रपाठकः॥

५ ४२ ५ ४२५२ ४ ५ ४२
(अपाञ्च साम॥) अपामिवेदूर्मयस्तौ। होवा।
५ २२ ३ ३२ २ १ २२ १ २२
हाइ। तुराणा२३४ः। हाहोइ। प्रमनी। षाः। ईर-

मुख्या "मनीषा" मनस ईषा मनीषा स्तुतिः तद्वान्। यद्वा। धिया विदधाति स्तुतीरिति धीः स्तोता तेन स्तुतिः प्रेर्यते। किञ्च। "दश स्वसारः" दशसङ्ख्याका अङ्गुलयः† "सदनेषु" यज्ञगृहेषु पात्राख्यभिमुखीकृत्य "वह्निं" वोढारं सोमं "सानौ" समुच्छ्रिते [अधिः सप्तम्यर्थानुवादकः] "अव्ये" अविमये अविबालेन कृते पवित्रे "अञ्जन्ति" प्रेरयन्ति‡॥

"प्रथमा मनीषा"—"प्रथमो मनीषी"—इति, "सदनेषु"—"सदनानि"—इति च साम्न ऋचः पाठः॥ ११॥ ७७

---

* ऋ० ७,४,५,३।

† "स्वसारः"—इति अङ्गुलिनामसु अष्टमं नैघण्टुकम् २,५।

‡ "अञ्जन्ति"—इति तु ऋग्वेदीयः पाठः, तमेवावावलम्बितं सायणेन। सामवेदीयपाठस्तु "सृजन्ति"—इति; अतएव 'सृजन्ति शोधयन्ति'-इति वि०।

२ ३ ५　२　३र २　१
तेइ । सोमम । च्छा३४ । हाहोइ । नमस्य । ताइः ।
२　२ ३ ५　२　३र २　१ २
उपचाइ । यन्तिसम । चा३४ । हाहोइ । आचवि ।
१　२ ३　२ ३ ५　२　३र २　५र
शा । तियुश । तीरूश । ता३४म । हाहा३४ । औ
र　२ १ १ १ १ १
होवा । वा३हा३३४५ः ॥ ६ ॥ ७८

प्रस्कण्वऋषिः* । "अपामिव" यथा उदकानाम् "ऊर्मयः" त्वरन्ते । "इत्"—इति पूरणः । तद्वत् "तर्तुराणाः" कर्मणि देवान् स्तोतुन्त्वरमाणाः । [तुर त्वरणे जौहोत्यादिकः (आ०) । यङ्लुगन्तस्य शानचि रूपम् । अभ्यासस्य उवर्णस्य रेफादेशश्छान्दसः । अभ्यस्तस्वरः† । तादृशा ऋत्विजः "मनीषाः" मनस ईशित्रीः स्तुतीः "सोमगच्छ" सोमं प्रति प्रेरयन्ति । "नमस्यन्तीः" नमस्यन्त्यः सोमं योजयन्त्यः सत्यः तम् "उपयन्ति" च । उप समीपे गच्छन्ति । तमेव "संयन्ति च" सङ्गच्छन्ते । "[च वा योगे प्रथमा (८,१,५९)—इति न निघातः] "उशतीः" कामयमानाः स्तुतयः "उशन्तं" कामयमानं सोमम् "आविशन्ति च" प्रविशन्ति च ॥ १२ ॥ ७८

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य सप्तमः खण्डः ॥

॥ इति त्रैष्टुभम् ॥

* "काण्वः"—इति कचि-नै० ।

† "अभ्यस्तानामादिः (६,१,१८९)"—इति मा० ।

पुरोजितीति-मुख्यास्तु नवर्चो बृहतीत्यसौ—
“आहर्य्यतायधृष्णवे” शिष्टा अनुष्टुभः स्मृताः* ॥
ऋषीणां विप्रकीर्णत्वात्तत्र तत्राभिदध्महे † ॥

तत्राष्टमे खण्डे—

सैषा प्रथमा।

२ १ ३ ३ १ २ २ १ २ २ १ २
पुरोजितीवोअन्धसःसुतायमादयित्नवे।
२ १ २ २ १ २ ३क २र
अपश्वानꣳश्नथिष्टनसखायोदीर्घजिह्व्यम् ॥ १ ॥ ७९

५ र २ ३ ५ २
(प्रह्वौ द्वौ ॥) पुरोजिती। वाअन्धार२३४साः। सु-
१र २ ५ २
तायामाऽ२दयाइ३१उवायेइ। त्नार२३४वे। अपश्वानार२ꣳ

---

* पुरोजितीतिमुख्याः ‘पुरोजितीवोअन्धसः’—इतिप्रभृतयः नव ऋचः, अत्राष्टमे खण्डे श्रूयन्त इति शेषः। तत्र आहर्यतायेति सप्तमी ऋक् बृहतीच्छन्दस्का, शिष्टा अष्टौ अनुष्टुप्छन्दस्का इत्यर्थः।

† ‘विनियोगस्त्वासां ज्योतिष्टोमे’—इति वि०।

‡ उ० १,१,१८,१ = ऋ० ७,५,१,१ = आरण्ये १,२,२२ = ऊहे १,१,११—१,१,१२—२,२,१८—४,१,१३—४,१,१४—६,२,९—७,२,१०—८,२,१५—८,२,१६—८,२,१७—१०,१,३—१०,१,१७—१२,१,६—१२,२,११—१२,२,१२—१२,२,१३—१२,२,१४—१३,१,६—१३,२,६—१६,१,३—१६,१,८—१६,१,९—१६,२,६—१७,१,३—१७,१,४—१७,१,१७—२०,१,१८—२०,२,१२—२०,२,१३—(२१,२,१)—२१,३,३—२२,१,६—२२,१,७—२२,१,९—२२,२,१३—२२,२,१५—२३,१,९ = ऊह्ये ३,१,१—२,१,१८—२,२,३—२,२,५—३,१,१—३,१,१९—३,२,२—४,१,८—४,२,५—४,२,८—४,२,१४—४,२,१६—(५,१,८—५,१,१२)—५,२,१४—६,१,१२।

२   ५   १ र
अथा३१उवाये३। ष्ठा२३४ना। सखायोदी२र्घजा३१

२   ५
वाये३। क्षौर२३४याम्॥ ७॥

५र   २ १ २ २   १ २र
पुरोजिती। वो३ओन्धा३साः। स्तायमा२। ऊ२।

१ २ २   १ २र
वा२३। ओ२। टा३याइत्ना३वे। आपश्वाना२म्।

१   १ २ २   १ २र
ऊ२। वा२३। ऊ२। आ३थाइष्टा३ता। साखा

र   १   १ २
योदा२३। ऊ२। वा२३। ऊ२३। घा२जा२३४

५र र   १   १   १११
औहोवा। ए३। क्षियार२३४५म्॥ ८॥

५र र   २   ५   २र
(कार्त्तयशम्॥) पुरोवाहाउ। जा२३४इती। वो

१ २ २   ४ ५   २ १ २ १   ४ ५
आऔ३हो३। धासाः। सुताऔ३हो३। यामा६।

५   २ १२र   १ २   १ र   २ २
हाउवा। दयित्नवे२। उपा। अपश्वान९अथा१इष्टा

२   १ २ २   ४ ५   ५   २
३ना। सखाऔ३हो३। योदा६। हाउवा। घजि

१   २ ११११
क्षियम्। उपा२३४५॥ ९॥

५४र ५ र ४५ ४
(औद्दसद्मनम्॥) पुरोजितीवोअन्धसः। ओवा-
५ २ र र १ र
हाइ। सुतायमादयित्नवओवा२३होइ। अपश्वानᳯ
१ २र र १ २ ३
श्नथिष्टनओवा२३होइ। साखायोदाइ। घाजिक्का२३
२ २ १र २१र१२२
४५याइ५६म्। सुवृक्तिभिर्नृमादनम्भरे२षुवा१॥ १०॥

३२ २ ४ र ५ २
(श्यावाश्वम्॥) पुरो३१। जी३ती। वोअ। धा
४ ५ १ र र २ १
३सः। एहिया। सू। तायमादा। यि। त्नवा२इ।
१र १र २ ४ ५ २र
एहिया२। अपश्वानᳯश्ना३थी३। ष्टा२३४ना। एहा
१र र१र २ ४ २
२इ। एहिया२। सखायोदाइघा३जी३। क्का३४५यो
५
६हाइ॥ ११॥

५र र ५ २१र
(आन्धीगवम्॥) पुरोजितीवो४न्धासाः। सुताय।
र २ १ १र र २
मादा२३या। ऊम्मा२१२। त्नवेअपश्वानᳯश्नथिष्टन।
१ २ २ १ २ १
साखा३उवा। यो२दो। घा२३जी। क्कियाम्। औ
४ ५ ४
२३होवा। हो५इ। डा॥ १२॥ ७९

अथ द्वितीया।

३ २ ३ २ ३ २उ ३ १ २ ३ १ २
अयम्पूषारयिर्भगःसोमःपुनानोअर्षति।
३ १ २ ३ १ २ ३क २र ३ १ २ ३ २
पतिर्विश्वस्यभूमनोव्यख्यद्रोदसीउभे॥ २ ॥ ८०*

श्यावाश्व ऋषिः†। हे "सखायः" सखिभूताः समानख्याना वा हे स्तोतारः! "वः" यूयं "पुरोजिती" [षष्ठ्याः पूर्वसवर्ण-दीर्घः‡] पुरः-स्थित-जयस्य "अन्धसः" अदनीयस्य सोमस्य स्व-भूताय "सुताय" अभिषुताय "मादयित्नवे" अत्यन्तं मदकराय रसाय "दीर्घजिह्व्यं" [दीर्घा जिह्वा अस्य स दीर्घजिह्वी "दीर्घ-जिह्वी च छन्दसि (४,१,५९)—इति "ङीषन्तत्वेन" निपातितः। तादृशं] "श्वानं" च "अपश्नथिष्टन" अपश्नथयत¶ अपबाधध्वम्। यथा श्वा राक्षसा वा "सुतं" सोमं न लिहन्ति तथा कुरु-तेत्यर्थः॥ १ ॥ ७९

---

* उ० ९,१,१६,१ = ऋ० ७,५,२,१=आरण्ये १,२,८—२,२,१७—२,२,१८—२,१,१९ ऊहे१,२,८—२,२,९— ७,१,९—११,२,१०—११,९,२०—१३,१,२—१५,१,१३—१५,१, १४—१५,१,१७—२०,१,५—२०,२,१८—२२,२,९=ऊह्ये२,१,६—२,१,८—३,१,११—३, २,११—५,२,९—६,१,८।

† 'भार्गवः श्यावाश्विः'—इति ऋषि·नि०।

‡ सुपांसुलुगित्यादिना (७,१,३९)।

¶ 'शिथिलीकरोतु'—इति वि०।

(क्रौञ्चानि त्रीणि ॥) अयम्पूषौहो। रयिर्भगाः। सो

मःपुनाइ। नोआर्षापुताई५६इ। पतिर्विश्वौहो। स्या-

भूमनाः। वियख्यद्रोइ। दासीइऊपुभाई५६इ॥ १३॥

अयम्पूषा। अयम्पूषा। रयिर्भगाः। सोमःपूना

२। नोअर्षताइ। पतिर्वाइस्वा२। ओस्याभू१माना२ः।

ओइवियख्या२३द्रो। दासीउभ। इडा२३भा३४३।

ओ२३४५इ। डा॥ १४॥

अयम्पूषा। हौ। रयिर्भगाईए। सोमा२ःपुना२।

नआ३४५। षा२३४ती। पतिर्विश्वस्यभूमनः। विय-

ख्या२३द्रो। दसीऊ२३भा३४३इ। ओ२३४५इ। डा॥

॥ १५॥ ८०

अथ तृतीया ।

२ ३ ३ १ २　३ २ ३ १ २　३ १ २
सुतासोमधुमत्तमाःसोमाइन्द्रायमन्दिनः ।
३ १ २　३ १ २　३ १ २
पवित्रवन्तोअक्षरन्देवान्गच्छन्तुवोमदाः ॥ ३ ॥ ८१*

५ र र　२　२　१र
(त्वाष्ट्रीसाम ॥) सुतासोमा। धुमाऽत्तमाः। सो-
२　२　२　१ ३ २　१　२　२
माइन्द्राश्यमा२। ए३। दिनपा। पवाइत्रवाश्न्तो

ययातिर्नाहुषऋषिः[†] । "पूषा" पोषकः सर्वेषाम्[‡] । "भगः" भजनीयः[¶] "रयिः" धनहेतुः "अयं" सोमः "पुनानः" पवित्रे पूयमानः सन् "अर्षति" कलशमभिगच्छति । तथा "विश्वस्य" सर्वस्य "भूमनः" भूतजातस्य "पतिः" पालयिता[§] "सोमः" "उभे" "रोदसी" द्यावापृथिव्यौ "व्यख्यत्" स्व-तेजसा प्रकाशयति । अनेन लोकद्वयपतित्वं सूचितम् ॥ ॥ २ ॥ ८०

* स० २,२,१५,१= ऋ०७,५,१,४=ऊहे २,२,३—२,२,३—२,२,४—७,१,२०—१५,२,२—१९,१,२—२०,१,१२—२७,१,१२—२२,२,११=ऊह्ये २,१,१०—४,१,७— ५,२,११—५,२,१२—६,१,१०—९,१,१५—६,२,२ ।

† 'नाहुषो मानवः'—इति ऋषि-नि० ।

‡ 'पूषा पुष्यतेः । सोमः । अथवा पूषा आदित्यः'—इति वि० ।

¶ 'भगः स एव सोमः शोभनः'—इति वि० ।

§ 'आदित्यात्मना'—इति वि० ।

|| 'विनियोगोऽस्य द्वितीयेऽहनि'—इति वि० ।

२ २ ३ २ १ २ २ २ २१र
३। ए३। त्वरन्ना। दाइवान्गच्छा३न्तुवा३ः। ए३। मदा-
२
आ ॥ १६ ॥

५ ४र ५र ४ ५ ४ १
(ऊर्ध्वेडत्वाष्ट्री॥) सुतासोमधुमत्तमाः। सोमा२
१ ३ २ ३ ५ २ १ २ र
इन्द्रा२। यमा२३४५। दी२३४नाः। पवित्रवन्तोअक्ष-
३र र २ १ २ १र २ १
रन्। देवानगच्छा। तुवोमा२३दा३४३ः। ओ२३४५
इ। डा ॥ १७ ॥

५ ४र ५र ४ ५ र ४र ५
(वासिष्ठम्॥) सुतासोमधुमत्तमाः। सोमाइन्द्रा।
२ १ ७ १र २ १ र
यमन्दिनः। पावित्रावा२। तोअक्षरन्। दाइवान्
२ ३ ५ २ १ २ ४ ५ ४
गच्छौवा। तू२३४वाः। मदा। औ३होवा। वोपुइ।
डा ॥ १८ ॥

५ ४र ५र ४ ५ र ४र
(आष्कारणिधनं त्वाष्ट्री॥) सुतासोमधुमत्तमाः। सो
५ २ ३र १ ७ १ २ १ ७
माहाउ। इन्द्रा३यामन्दिना२ः। इन्द्रा३हो। यमा२

२ ५ २ १ ७ ३ २ १
दा२३४इना:। पविन्नवा३न्तोअत्तारा२न्। चवा३ हो।
७ ३ ५ २र र १ २ ३र १
तो२त्तार२३४रान्। देवान्गच्छा२न्तूवो१मादा२ः। देवा
१ ३ ५ १ ३ ५र र ३
३न् वोइ। गच्छोर२३४हा। तूर्वार२३४औहोवा। मदा-
१ १ १ १ १
२ आर२३४५॥ १९॥

५ र र ५ २र र
(वासिष्ठम्॥) सुतासोमधुमत्तमा६ए। सोमाइ
ऽर १ ७ १ १ ७
न्द्रा३यामन्दिना२ः। दाइना२ः। पविन्नवा३न्तोअक्षा-
१ र र १ १
रा२न्। क्षारा२न्। देवान्गच्छा३न्तूवो१मादा२ः।
१ ३र २ १ ३ ५ १ २ ५र
मादा२ः। देवा३न्वोइ। गच्छार२३४हा। तूर्वार२३४औ
र २ १ १ १ १ १
होवा। मदा३ई२३४५॥ २०॥

१ र र १ २ ३ २ १
(स्वारत्वाष्ट्री॥) सुतासोमा३हा। धुमत्तामा२ः।
१र र २ २ ३ २ १ १ २ २ ३र
सोमाइन्द्रा३हा। यमन्दाइना२ः। पविन्नवा३हा। ता-
२ १ १र र २ २ ३ १ १ ५
अक्षारा२न्। देवान्गच्छा३हा। तुवो३हो२३४। वा।
४ ५
मापुदोइवाइ॥ २१॥

५ र ३र २ २ २
(द्विरभ्यस्तत्वाष्ट्री॥) सुता। सोमा३। हा३हा।
२ २ ३ र ५र ३ २ २ २ १ २
धुमत्तामा२३४ः। सोमाः। इन्द्रा३। हा३हा। यम
१ ५ ३ २ २ २ १र २ १
न्दाइना२३४ः। पवि। त्रवा३। हा३हा। तो३अत्ता
र ५र ३ २ २ २ १ २ १
रा२३४न्। देवान्। गच्छा३। हा३हा। तुवो३हो२
५ ४ ५
३४। वा। मा५दो६हाइ॥ २२॥

५ र २ ४ ५ ४ ५ २र १र
(वासिष्ठम्॥) सुतासो३माधुमत्तमाः। सोमा
२ १ २ १ २ ३ ५ २ र
इन्द्रा। यमन्दिनः। पावा३ओ२३४वा। त्रवन्ता३अत्तरन्।
१र र २ १ २१र २ १
देवान्गच्छ। तुवोमा२३दा२४३ः। ओ२३४५इ। डा॥
॥ २३॥ ८१

ययातिर्नाहुषऋषिः*। "मधुमत्तमाः" अतिशयेन माधुर्योपेताः अतएव "मन्दिनः" मदकराः "सुतासः" अभिषुताः सोमाः "पवित्रवन्तः"† पवित्रे वर्त्तमानाः सन्तः "इन्द्राय" इन्द्रार्थम् "अक्षरन्" पात्रेषु क्षरन्ति। अथ प्रत्यक्षस्तुतिः। "वः" युष्माकं

* 'विनियोगोऽस्य तृतीयेऽहनि'—इति वि०।

† 'दशापवित्राक्ता:'—इति वि०।

अथ चतुर्थी ।

१ २　३ १ २ ३ १ २　३ १ २
सोमाःपवन्तइन्दवोस्मभ्यङ्गातुवित्तमाः ।
३ २ ३ १ २ ३ १ २ ३क २र ३ १ २
मित्राःस्वानाअरेपसःस्वाध्यःस्वर्विदः ॥ ४ ॥ ८२*

४　५　२　१ ७　२
(कौञ्चे द्वे ॥) हाउसोमाः । पवा३न्ताइन्दावाउ ।
२　१ १ ७ २　२
वा३ । हाउवा । अस्मभ्यङ्गातूवित्तामाउ । वा३ । हा
१र र र　२ २　२
उवा । मित्राः स्वानाआरे१पासाउ । वा३ । हाउवा
५र ३ २ १ ४ २ ५
३४ । सुवा । धिया३ः । स्व२३वा३ः । वा३४५इदो६हा
इ ॥ २४ ॥

५र र　३ १ ३ ४ ५　२ १ २ १　२ ३ २ १
सोमाः पवन्तइन्दवाः । अस्माभ्यङ्गा । तुवित्तमाः ।
२ ३　५　१र १र १र १ २　३ र २ १　१ १
माइत्राओ२३४वा । स्वानाअरेपसः । सुवाधियाः । सुव
२　१
र्वा२३इदा२४३ः । ओ२३४५इ । डा ॥ २५ ॥ ८२

"मदाः" मद-हेतवो रसाः "देवान्" इन्द्रादीन्† "गच्छन्तु" ॥
॥ ३ ॥ ८१

* उ० ४,१.२०,१—स्त० ७,५,२,५ = ऊहे ३,२,१३—३,२,१४—३,२,१५—३,२,१६ —१५,२,१६—१५,२,१७—१५,२,१८—१६,१,१—२१,१,१४ = ऊह्ये ६,१,२० ।

† 'यज्ञादीन्'—इति वि० ।

अथ पञ्चमी।

३ १ २ ३ १ २ ३ १ २ ३ १ २
अभीनोवाजसातमꣳरयिमर्षशतस्पृहम्।
१ २ ३ १ २ ३ १ २३ १२
इन्दोसहस्रभर्णसन्तुविद्युम्नंविभासहम्॥ ५॥ ८३*

५ र र १ २ ३
(सोमसामानि त्रीणि॥) अभीनोवा। आ२सा२३
५र र १ २ ५ २ १ २ १ २ १ र
४औहोवा। ता२३४माम्। रयिमरिशतस्पृहम्। इन्दो

मनुः सांवरणऋषिः। "गातुवित्तमाः" अतिशयेन मार्गस्य लम्भकाः† "इन्दवः" दीप्ताः‡ सोमाः "पवन्ते" अस्मभ्यं मदर्थं "चरन्ति" आगच्छन्ति वा। कीदृशाः? "मित्राः" देवानां सखिभूताः "स्वानाः" अभिषूयमाणाः "अरेपसः" पापरहिताः अतएव "स्वाध्यः" शोभन-ध्यानाः "स्वर्विदः" सर्वज्ञाः॥

"स्वानाः"-"सुवानाः"—इति पाठो॥ ४॥ ८२

* उ० ५,१,१६,१ = ऋ० ७,४,२३,१ = ऊहे ५,१,३—५,१,४—५,१,५ — ५,१,६—५,१,७—५,१,८—१२,१,१५—१२,१,१६—१७,१,१२—१७,१,१३—१७,१,१४—१७,१,१९—१८,१,१०—१९,१,२—१९,१,९।

† "गातुः"—इति पृथिवी-नामसु विंशतितमं नैघण्टुकम् १,१। किञ्च निरुक्त-चतुर्थे—"गातुं यज्ञाय गातुं यज्ञपतय इत्यपि निगमो भवति। गमनं यज्ञाय गमनं यज्ञपतये"—इति च यास्कः।

‡ 'ज्योतिरिन्दुः'—इत्यादि नि० नै० प० १,१७।

